तथा चानुभवः 'पर्वतं पश्यामि वह्निमनुमिनोमीति' ॥

न्यायमते तु पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः। असन्निकृष्टपक्षकानुमितौ तु सर्वांशेऽपि ज्ञानं परोक्षम्। सुरभिचन्दनमित्यादिज्ञानमपि चन्दनखण्डांशे अपरोक्षं सौरभांशे तु परोक्षं सौरभ्यस्य चक्षुरिन्द्रियायोग्यतया योग्यत्वघटितस्य निरुक्तलक्षणस्याभावात् ॥

---

प्रसिद्धस्यानुमितित्वस्य निवर्तनमयुक्तमिति चेत्तत्राह-**तथा चेति**। अनुभवोऽपीत्यर्थः। तमेवावेदयति-**पर्वतमिति**। तथा च तस्याः प्रसिद्धेर्वह्न्यंशविषयत्वान्न तन्निवर्तनमस्माभिः क्रियते इति भावः ॥

एवं स्वपक्षे प्रसिद्धानुमानं प्रदर्श्य परमते तदतिक्रमणमापादयति-**न्यायमत इति**। स्वपक्षात्तत्पक्षे वैलक्षण्यद्योतकस्तुशब्दः। पृथिवीपरमाणवो गन्धवन्तः पृथिवीत्वात्, घटादिवदित्यादावप्रत्यक्षपक्षकानुमितौ पक्षे साध्ये च ज्ञानं परोक्षमेवेत्याह-**असन्निकृष्टेति**। ननु सुरभिचन्दनमित्यादौ सौरभ्यांशे ज्ञानं परोक्षमपरोक्षं वा ? नाद्यः,(१) तत्सामग्र्यभावायोग्यविषयत्वाच्च। न द्वितीयः, तदाकारवृत्त्यभावादित्याशङ्क्याद्यपक्षमवलम्ब्याह-**सुरभीति**। आदिपदेन मधुरमाम्रफलमित्यादिपरिग्रहः। **परोक्षमिति**। आघ्रातपूर्वं तत्सौरभं चेत्तर्हि तत्र ज्ञानं स्मृतिः अनाघ्रातपूर्वं चेत्तर्हि (२)चन्दनखण्डत्वाल्लिङ्गादनुमितिरित्यर्थः। ननु सौरभ्यस्यापि योग्यविषयत्वात्तदंशेऽपि ज्ञानपरोक्षमेव किं न स्यादिति चेत्तत्राह-**सौरभ्यस्येति**। तथा च तत्तदिन्द्रिययोग्यत्वघटितलक्षणस्याभावाददोष इत्यर्थः ॥

नन्वसन्निकृष्टपक्षकानुमितिस्थले पक्षापरोक्षतायां यथाऽसन्निकृष्टत्वं

---

(१) परोक्षसामग्र्यभावात्। परोक्षज्ञानसामग्री च सुरभित्वव्याप्यं चन्दनखण्डत्वमिति व्याप्तिज्ञानादिरूपा तस्याः सुरभिचन्दनमित्याकारकज्ञानात्पूर्वमभावादित्यर्थः। विषयस्यापि योग्यत्वेन अनुमानस्यानुपयोगाच्च।

(२) अयं चन्दनखण्डः सुरभिः चन्दनखण्डत्वात् चन्दनखण्डान्तरवत्।

न चैवमेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयोर्जातित्वं (१)न स्यादिति वाच्यम्। इष्टत्वात्। जाति-

बाधकं तथा सन्निकृष्टपक्षकानुमितिस्थले सुरभिचन्दनमित्यादौ परोक्षत्वापरोक्षत्वयोरभ्युपगमे प्रसिद्धजातिबाधकसाङ्कर्यप्रसङ्गो बाधकस्तथा च नेदं युक्तमित्याशङ्क्य निराचष्टे—**न चेति। एवम्**-उक्तप्रकारेण जात्युपाध्युदासीनधर्ममात्रस्याभ्युपगमेन। तयोर्जातित्वाभावस्येष्टत्वादिति हेतुमाह-**इष्टत्वादिति।** ननु घटत्वादिवत्परोक्षत्वापरोक्षत्वयोरपि प्रामाणिकतया प्रसिद्धस्यास्यानभ्युपगमेऽतिप्रसङ्ग इति चेत्तत्राह-**जातित्वेति।** ननु नीलघटत्वादावुपाधित्ववद् घटत्वादौ जातित्वं कुतो न प्रामाणिकमित्याशङ्कानिरासायोपाधित्वग्रहणम्। घटत्वादौ जातित्वमित्येवंरूपा परिभाषा तथा नीलघटत्वादावुपाधित्वमित्येवंरूपा या परिभाषा तयोर्द्वयोरपि सकलप्रमाणाविषयतयाऽप्रामाणिकत्वादिति परिभाषाया एवोभयत्र सम्बन्धः। अप्रामाणिकत्वाज्जातित्वोपाधित्वयोरिति शेषः इति केचित् (२)। ननु कुतः सकलप्रमाणागोचरता घटोऽयमिति

(१) पार्वतो वह्निमान् इति वह्निप्रकारक-पर्वतविशेष्यक-संयोगसंसर्गकं-विशिष्टज्ञानम् एकमेव। एकस्मिन्नेव ज्ञाने पर्वतरूपविशेष्यांशे प्रत्यक्षत्वे वह्निरूपविशेषणांशे परोक्षत्वे स्वीकृते तु प्रत्यक्षत्वपरोक्षत्वयोर्जातित्वं न स्यात्, सांकर्यरूपजातिबाधकघटितत्वात्। परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशः सङ्करः। पृथिवीपरमाणवो गन्धवन्त इत्यनुमितौ अपरोक्षत्वात्यन्ताभावसमानाधिकरणं परोक्षत्वं वर्तते, घटोऽयमिति प्रत्यक्षज्ञाने परोक्षत्वात्यन्ताभावसमानाधिकरणं प्रत्यक्षत्वं वर्तते। तयोः परस्परविरुद्धधर्मयोः परोक्षत्वापरोक्षत्वयोः एकत्र पर्वतो वह्निमानित्यत्र समावेश इति तयोर्जातित्वं न स्यादिति तार्किकाणामाक्षेपः।

(२) केचित्-शिखामणिकाराः। 'घटत्वनीलघटत्वयोः जातित्वोपाधित्वयोरिति शेषः' इतिशेषं प्रपूर्य व्याख्यातवन्तः। तच्च युक्तं दृश्यते परिभाषाया अप्रामाणिकत्वोक्तावपि फलतः घटत्वनीलघटत्वयोरेवाप्रामाणिकत्वकथनं स्यात्।

त्वोपाधित्वपरिभाषायाः(१)सकलप्रमाणागोचरतया अप्रामाणिकत्वात् । घटोऽयमित्यादि प्रत्यक्षं हि घटत्वादिसद्भावे मानं न तु तस्य जातित्वेऽपि ॥

जातित्वरूपसाध्याप्रसिद्धौ तत्साधकानुमानस्याप्यनवकाशात् । समवायासिद्ध्या ब्रह्मभिन्ननिखिलप्रपञ्चस्यानित्यतया च नित्यत्वसमवेतत्वघटितजातित्वस्य घट-

---

प्रत्यक्षगोचरत्वादित्याशङ्क्य तस्य तत्सद्भाव एवोपक्षीणस्य तज्जातित्वसाधने उदासीनत्वादित्याह—**घटोऽयमिति** ।

ननु प्रत्यक्षाभावेऽपि घटत्वादिकं जातिः उपाधिभिन्नसामान्यधर्मत्वात्सत्तावदित्यनुमानमस्तु तत्र प्रमाणमित्याशङ्क्याह—**जातित्वेति** । जातित्वरूपस्य नित्यानेकसमवेतत्वलक्षणस्य साध्यस्य(२)प्रसिद्धौ तदायत्तव्याप्तिज्ञानाद्यभावेनानुमानानवसरादित्यर्थः । नन्वेवं भूतजातित्वाप्रसिद्धावपि तद्घटकनित्यत्वैकत्वानेकसमवेतत्वानामस्त्यात्माकाशघटादिषु प्रसिद्धिरिति तामादय तद्घटितजातित्वं घटत्वादौ सेत्स्यतीत्याशङ्क्याह—**समवायेति** । ननु रूपी घटो मृद् घट इति प्रत्ययस्य संयोगानवगाहितया परिशेषात्समवायः सिद्ध्यतीति चेत् । न । गुणगुणिनोरवयवावयविनोश्चात्यन्तभेदे तत्सम्बन्धस्य च (३)

---

घटोऽयमित्यादिप्रत्यक्षस्य घटत्वसद्भावेऽप्रमाणत्वं प्रदर्शयतो ग्रन्थकर्तुस्तत्रैव तात्पर्याच्च ।

(१) परिभाषासङ्केतः आदेचोर्वृद्ध्यादिरिव स्वस्वशास्त्रीयसंज्ञा इति यावत् ।

(२) साध्ये साध्यतावच्छेदकस्याभावः साध्याप्रसिद्धिः, यथा घटत्वं जातिरित्यत्र जातित्वस्य नित्यानेकसमवेतत्वरूपस्याप्रसिद्धिः । तथा च काञ्चनमयवह्निमान् इत्यत्र साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धादनुमित्यभावः, तथैव प्रकृतेऽप्यनुमित्यभावः ।

(३) तत्सम्बन्धस्य—समवायस्य च तथात्वे अत्यन्तभेदे सामानाधिकरण्यानुपपत्तेः । न हि जातु दण्डः पुरुष इति भवति । भवति तु शुक्लो घटः मृद्घट इत्यादि अतोऽभेद एव शुक्लघटयोरिति । तथा च दण्डः पुरुष इति व्यतिरेकोदाहरणम् ।

तथात्वे दण्डपुरुषादाविव शुक्लो घटो मृद्घट इति समानाधिकरणप्रत्ययानुपपत्तेः । किञ्च समवायिभ्यां सम्बद्धः समवायो(१)विशिष्टप्रत्ययनियामक उतासम्बद्धः ? नाद्यस्तस्यान्यस्तस्याप्यन्यः सम्बन्धः कल्प्य इत्यन(२)वस्थाप्रसङ्गात् । ननु समवायिभिर्नित्यसम्बद्ध एवायं गृह्यतेऽतो नोक्तदोष इति चेत्तर्हि संयोगोऽपि संयोगिभिर्नित्यसम्बद्धत्वात्सम्बन्धान्तरं नापेक्षेत । अर्थान्तरत्वादपेक्षत इति चेत्, तर्हि समवायोऽपि तथात्वात्कुतो नापेक्षते । संयोगो गुणत्वात्तथेति चेन्न । गुणपरिभाषाया अतन्त्रत्वादपेक्षाकारणस्य च तुल्यत्वात् । न (३)द्वितीयोऽतिप्रप्रसङ्गात् । किञ्च स अनेक एको वा ? आद्येऽपसिद्धान्तो गौरवं च, द्वितीये रूपज्ञानादिसमवायस्य वायुघटादिवृत्तिसमवायाभेदाद्रूपवान् वायुः घटो विलक्षणगतिमानिति प्रतीतिप्रसङ्गात् । न च तत्र(४) रूपाद्यभावा-

---

(१) दण्डी पुरुष इतिवद्रूपी घट इति विशेषितविषयकप्रत्ययनियामक इत्यर्थः ।

(२) रूपी घटः इत्यत्र रूपघटावत्यन्तभिन्नौ सम्बद्धौ च । अयुतसिद्धयोरनयोर्न संयोगादिः सम्भवति, अतो नित्यसम्बन्धस्य समवायस्य सिद्धिर्नैयायिकानाम् । तत्रेदं प्रतिवक्तव्यम् । समवायेऽपि सम्बन्धः स च तत्त्वादेव द्विष्ठः रूपे घटे च वर्तते न रूपघटात्मक एव । रूपतत्समवायावप्यत्यन्तभिन्नावेव इत्यन्तभेदसाम्यात्तावपि न सम्बन्धान्तरमृते सम्भन्त्स्यतः । असम्बद्धेन अतदात्मना च समवायेन उपकाराधानासम्भवात् । तथा च कल्पितोऽपि रूपसमवाययोः सम्बन्धोऽपि सम्बद्ध एव अतिशयाधानसमर्थो नासम्बद्ध इति भवेदनवस्था समवायकल्पने । समवायस्य रूपघटयोः स्वरूपेणैव स्थितिकल्पने तु संयोगस्यापि घटपटयोः स्वरूपेणैव स्थितिकल्पनेनैव सामञ्जस्ये संयोगस्य समवायेन स्थितिकल्पना अकारणिका स्यात् तस्माद् रूपघटयोस्तादात्म्यमेव । विस्तरस्त्वाकरे द्रष्टव्यः ।

(३) द्वितीयः पक्षः उत असम्बद्ध इति । असम्बद्धेन चेत्समवायेन रूपी घट इति प्रत्ययः तदा असम्बद्धत्वाविशेषात् असम्बद्धेन पटेनापि रूपी घट इति प्रत्ययप्रसङ्गः ।

(४) तत्र वायौ घटे च, रूपविलक्षणगत्याद्यभावात् ।

त्वादावसिद्धेश्च(१)। एवमेवोपाधित्वमपि निरसनीयम् ॥

---

नोक्तप्रतीतिप्रसङ्ग इति वाच्यम्। (२)तद्वृत्तित्वप्रयोजनकसम्बन्धे सति तदभावव्यवहारस्य व्याहतत्वात्। इत्येवं समवायसिद्ध्या प्रत्यक्षेण, कार्यत्वब्रह्मभिन्नत्वलिङ्गकानुमानेन, 'सदेवसोम्येदमग्र आसीत्' ( छा० ६-२-१ ) इतिश्रुत्या च ब्रह्मभिन्नसकलप्रपञ्चस्यानित्यतया च नित्यत्वसमवेतत्वघटितजातित्वस्य घटत्वादावसिद्धेश्चेत्यर्थः। अप्रामाणिकत्वमिष्टत्वे हेतुस्तत्र(३)प्रत्यक्षस्य घटत्वादेर्जातित्वे मानभावादिहेतुत्रयम्(४)। ननूपाधित्वपरिभाषाया अप्यप्रामाणिकत्वं प्रतिज्ञाय कथं जातित्वपरिभाषाया एव (५)तत्त्वे हेतूपन्यास इत्याशङ्क्योक्तहेतुभिरेव तस्या अप्यप्रमाणिकत्वसाधनस्य सुवचत्वादित्याशयेनातिदिशति-**एवमिति**। तथा च नीलघटत्वादेरुपाधित्वपरिभाषा न प्रामाणिकी नीलोऽयं घट इत्यादिप्रत्यक्षस्य नीलघटत्वसद्भावे मानतया तस्योपाधित्वेऽमानत्वात्। उपाधित्वरूपसाध्याप्रसिद्धौ, तत्साधकस्य-नीलघटत्वादिकमुपाधिः जातिभिन्नसामान्यधर्मत्वात् आकाशत्वादिवदित्यनुमानस्य अनवकाशात् समवायाद्यसिद्ध्योपाधित्वासिद्धेश्चेत्येवं निरसनीयमित्यर्थः ॥

---

( १ ) घटत्वस्य जातित्वे प्रत्यक्षानुमाने प्रमाणे तार्किकैर्दीयेते तयोरन्यथासिद्धत्वप्रदर्शनान्न ताभ्यां घटत्वस्य जातित्वं सेत्स्यतीति तात्पर्यम्। घटत्वस्य उपाधित्वमपि प्रत्यक्षानुमानयोरन्यथासिद्धत्वप्रदर्शनद्वारा निरसनीयमिति।

( २ ) वायौ तद्वृत्तित्व-रूपवृत्तित्व-प्रयोजके रूपसमवायसम्बन्धे सत्यपि रूपं नास्तीति तदभाव-रूपाभाव-व्यवहारस्य व्याहतत्वादित्यर्थः।

( ३ ) अप्राभाणिकत्त्वे।

( ४ ) प्रत्यक्षस्य घटत्वसद्भावे प्रमाणत्वं न तस्य जातित्वे इति एको हेतुः। जातिस्वरूपसाध्याप्रसिद्ध्या अनुमानस्यानवकाश इति द्वितीयः। जातिलक्षणघटितनित्यत्वसमवेतत्वाद्यसिद्ध्याऽपि जातित्वासिद्धिरिति तृतीयः।

( ५ ) तत्त्वे–अप्रामाणिकत्वे।

पर्वतो वह्निमानित्यादौ च पर्वतांशे वह्न्यंशे चान्तःकरणवृत्तिभेदाङ्गीकारेण तत्तद्वृत्त्यवच्छेदकभेदेन परोक्षत्वापरोक्षत्वयोरेकत्र(१) चैतन्ये वृत्तौ न विरोधः। तथा च तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम् ॥

(२)घटादेर्विषयस्य प्रत्यक्षत्वं तु प्रमात्रभिन्नत्वम्।

---

नन्वेवमप्येकस्यैव चैतन्यस्य परोक्षत्वापरोक्षत्वात्मविरुद्धधर्माक्रान्तत्वं विरुद्धमित्याशङ्क्याह—**पर्वत इति**। **चैतन्ये**-प्रमात्मकचैतन्ये। एवं सतीदं फलितमित्याह—**तथा चेति**। तत्तद्वृत्त्यवच्छिन्नचैतन्यस्य तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तस्मिंस्तस्मिञ्ज्ञानांशे प्रत्यक्षत्वप्रयोजकमिति ज्ञानगतस्य प्रत्यक्षत्वस्य प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वमित्युक्तप्रयोजकेन विवक्षितमित्यर्थः।

---

(१) एकत्रेति। मूले, घटावच्छिन्नकाशो मठावच्छिन्नाकाशान्न भिद्यते विभाजकयोर्घटमठयोरेकदेशस्थत्वात्। एवम् अन्तःकरणवृत्तिघटयोरप्येकदेशस्थत्वान्नोपधेयभेदकत्वमित्युक्तमधस्तात्। तथा च पर्वतवह्न्योरप्येकदेशस्थोपाधिद्वययोर्नोपधेयचैतन्यभेदकत्वमिति कुतः परोक्षत्वापरोक्षत्वे एकस्मिन्नेव चैतन्ये सम्भवतः इत्याक्षेपं मनसि निधाय उत्तरयति-पर्वतो वह्नीत्यादिना। तथा च अयं घट इत्यादौ घटावच्छिन्नमन्तःकरणावच्छिन्नं च चैतन्यम् एकमेव, पर्वताकारा वृत्तिस्तु चक्षुःसन्निकर्षाज्जाता बाह्यगोचरा, तदवच्छिन्नं चैतन्यं पर्वतदेशीयम्, वह्न्याकारा वृत्तिस्तु व्याप्तिज्ञानजन्या हृदयदेशीयचैतन्यावच्छेदिका, अतः परोक्षत्वापरोक्षत्वयोरविरोध इत्याशयः।

(२) द्वितीये घटादेरित्यधिकः पाठो दृश्यते पुस्तकान्तरेषु स च युक्ततरः। किं ज्ञानगतेत्यादिना विकल्प्य आद्ये प्रमाणचैतन्येत्यादिना दत्तोत्तरत्वादत्र द्वितीयकल्पस्य निराकरिष्यमाणत्वादिति। अत्र प्रत्यक्षत्वं तु इत्यस्य प्रत्यक्षत्वप्रयोजकम् इत्यर्थः, तथैवोपक्रान्तत्वात्। अत्रेदमूह्यम्। अयं घट इति ज्ञानमपि प्रत्यक्षं

**ननु कथं घटादेरन्तःकरणावच्छिन्नचैतन्याभेदः ? अहमिमं पश्यामि इति भेदानुभवविरोधादिति चेत्। उच्यते। प्रमा-**

एवं ज्ञानप्रत्यक्षत्वस्य प्रयोजकमभिधाय प्रमेयगतस्य तस्य त(१)-दाह-**घटादेरिति।** तुशब्देनेन्द्रियजन्यज्ञानविषयत्वं विषयप्रत्यक्षत्व-मित्यादितल्लक्षणनिरासः। मन रूपेन्द्रियजन्यानुमितिज्ञानवि(२)षयेति-व्याप्तेः। **प्रमात्रभिन्नत्वमिति।** घटादेर्विषयस्येत्यनुष(३)ज्यते। ननु विषयस्य घटादेः प्रमात्रभिन्नत्वमुच्यते तदवच्छिन्नचैतन्यस्य वा ? नाद्यः, तस्य जडत्वेन तत्त्वासम्भवात्। न द्वितीयः, अहं मनुष्य इति प्रतीतिः स्यात्। न च सोपलभ्यते, उपलभ्यते च तद्विरुद्धम्। अह-मिमं पश्यामीति भेदप्रतीतिः, अतः कथं विषयस्य प्रमात्रभेद इति शङ्कते—**नन्विति।** प्रमात्रभेदो नाम घटादे(४)स्तदवच्छिन्नचैत-न्यस्य चैक्यं न विवक्षितं येन विरोधः स्यादपि त्वन्यदेव। तदभि-न्नत्वमिति समाधत्ते—**उच्यत इति।** प्रमातृसत्तेत्यस्य प्रमातृलक्षण-

ज्ञानविषयो घटोऽपि प्रत्यक्षः। आद्यस्य घटज्ञानं प्रत्यक्षमिति व्यपदेशः द्विती-यस्य घटः प्रत्यक्ष इति। तत्र ज्ञानगतप्रत्यक्षप्रयोजकमुक्तं विषयगतस्य तस्य प्रयो-जकमिदानीमाह—प्रमात्रभिन्नत्वमिति। अत्र यद्यपि घटादेर्विषयस्य प्रत्यक्षत्वं प्रत्यक्षज्ञानविषयत्वं ज्ञानस्य तु प्रत्यक्षत्वं पूर्वोक्तमेव, अनुमित्यादिज्ञानानां चित्त्वेन स्वांशे प्रत्यक्षत्वेऽपि प्रमाणचैतन्यविषयावच्छिन्नचैतन्याभेदाभावादेव अनुमितिविषये नातिप्रसङ्गः। तथापि विषयस्यापरोक्ष्यं संविदभेदात् इति विवरणे विषयप्रत्यक्षलक्षणत्वेन प्रमात्रभेदस्यैवोक्तत्वादेवमुक्तमिति तत्त्वम्।

(१) तस्य–प्रत्यक्षत्वस्य, तत्–प्रयोजकम् आह।

(२) न्यायमते मनस इन्द्रियत्वात् तज्जन्यानुमितिविषये परमाण्वादा-वतिव्याप्तेरित्यर्थः। (३) घटादेर्विषयस्य प्रमात्रभिन्नत्वं प्रत्यक्षत्वमित्यर्थः।

(४) तदवच्छिन्नस्येत्यस्य घटावच्छिन्नस्य अन्तःकरणावच्छिन्नस्य वाऽर्थः, तयोः पूर्वोक्तप्रकारेणैक्यात्।

त्रभेदो नाम न तदैक्यम्, किन्तु प्रमातृ(१)सत्ताऽतिरिक्तसत्ताकत्वाभावः। तथा च घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता, अधिष्ठानसत्ताऽतिरिक्ताया आरोपितसत्ताया अनङ्गीकारात्। विषयचैतन्यञ्च(२) पूर्वोक्तप्रकारेण प्रमातृचैतन्यमेवेति(३)प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता नान्येति सिद्धं घटादेरपरोक्षत्वम्॥

अनुमित्यादिस्थले त्वन्तःकरणस्य वह्न्यादिदेशनिर्गमनाभावे वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यानात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति नातिव्याप्तिः।

(४) नन्वेवमपि धर्माधर्मादिगोचरानुमित्यादिस्थले

---

सत्तेत्यर्थः। न तु तन्निष्ठसत्ताजातिः, प्रमातृप्रमेयनिष्ठसत्ताजातेरेकतया तन्निष्ठसत्ताऽतिरिक्तसत्ताया असिद्धेः। तथा च प्रमात्रभेदस्योक्तलक्षणे सतीदं फलितमित्याह—**तथा चेति। प्रमातृचैतन्यमेवेति।** अतः प्रमातृसत्ताऽतिरिक्तसत्ताशून्यत्वं घटादेरपरोक्षत्वं सिद्धमित्यर्थः।

अनुमेयवह्न्यादेश्चैतन्यसत्ताऽतिरिक्तसत्ताशून्यत्वेऽपि तस्य प्रमात्रनात्मकतया नातिव्याप्तिरिति चैतन्यपदं विहाय प्रमातृपदोपादानमित्याशयेनाह—**अनुमित्यादीति।** नन्वेवमप्यतिव्याप्तिरस्तीति शङ्कते—**नन्विति।** प्रत्यक्षयोग्यत्वस्यापि विषयविशेषणत्वेन योग्यविषयस्य

---

(१) वह्निमान् पर्वत इत्यत्र वह्न्यवच्छिन्नस्य देवदत्तीयान्तःकरणावच्छिन्नस्य च चैतन्यस्य वस्तुतः एकत्वादतिव्याप्तिः स्यादतः चैतन्यपदं विहाय प्रमातृपदोपादानं कृतम्। तच्च मूले अनुमित्यादिस्थले त्वित्यादिना स्पष्टीकरिष्यते।

(२) पूर्वोक्तेति। यथा तडागोदकं कुल्यात्मनेत्यत्रोक्तेनेत्यर्थः।

(३) इतिशब्दो हेत्वर्थः।

(४) एवमपि-प्रमातृसत्ताऽतिरिक्तेत्यादिलक्षणस्य अनुमेयवह्न्यादावतिव्याप्त्यभावेऽपि। तत्रान्तःकरणगमनाभावादिति भावः।

Yogya is the qualification of विषय and not of वृत्ति



धर्माधर्मयोः प्रत्यक्षत्वापत्तिः, धर्माद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मादिसत्तायाः प्रमातृसत्तानतिरेकादिति चेत् । न । योग्यत्वस्यापि विषयविशेषणत्वात् ॥

(१)नन्वेमपि रूपी घट इति प्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः, रूपावच्छिन्नचैतन्यस्य परिमाणाद्यवच्छिन्नचैतन्यस्य चैकतया रूपावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदे परिमाणाद्यवच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया परिमाणादिसत्तायाः प्रमातृसत्ताऽतिरिक्तत्वाभावादिति चेत् । न । तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात् । रूपाकारवृत्तिदशायां परिमाणाद्याकारवृत्त्यभावेन परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वाभावेनातिव्याप्त्यभावात् ॥

---

प्रमात्रभिन्नत्वरूपलक्षणस्य धर्मादावभावान्नातिव्याप्तिरित्याह—नेति ।

ननु घटगतरूपप्रत्यक्षदशायां तद्गतपरिमाणादावतिव्याप्तिः, रूपावच्छिन्नचैतन्यस्यैव परिमाणाद्यवच्छिन्नचैतन्यरूपतया तस्य(२)तदभिन्नप्रमातृसत्ताऽतिरिक्तसत्ताकत्वाभावादिति शङ्कते—नन्वेमपीति । परिमाणादेः प्रमातृसत्ताऽतिरिक्तसत्ताशून्यत्वेऽपि परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्यसत्ताऽतिरिक्तसत्ताशून्यत्वाभावान्नाव्याप्तिरिति समाधत्ते—नेति ।

ननु परिमाणादावतिव्याप्तिवारणाय तत्तदाकारवृत्त्युपहितत्वस्यापि

---

(१) योग्यत्वस्य विषयविशेषणत्वेऽपीत्यर्थः ।

(२) तस्य-परिमाणादेः, तदभिन्ना-परिमाणाभिन्ना, या प्रमातृसत्ता तदतिरिक्तसत्ताकत्वाभावादित्यर्थः । परिमाणादीनां कल्पितत्वेन स्वाधिष्ठानभूतचैतन्यसत्ताकत्वात्, तस्य च प्रमात्रभिन्नत्वादिति भावः ।

(१) नन्वेवं वृत्तावव्याप्तिः, अनवस्थाभिया वृत्तिगोचरवृत्त्यनङ्गीकारेण तत्र स्वकारवृत्त्युपहितत्वघटितोक्तलक्षणाभावादिति चेत्। न। अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वस्य तत्रापि भावात्। एवं चान्तःकरणतद्धर्मादीनां केवलसाक्षिविषयत्वेऽपि तत्तदाकारवृत्त्यभ्युपगमेन उक्तलक्षणस्य तत्रापि सत्त्वान्नाव्याप्तिः॥

---

प्रमातृविशेषणत्वे वृत्तावव्याप्तिरिति शङ्कते—**नन्वेवमिति**। अनवस्थाभयेन वृत्तिगोचरवृत्त्यनङ्गीकारेऽपि घटमहं जानामीति वृत्तेः स्वविषयत्वाभ्युपगमात्स्वेतरवृत्त्यवच्छिन्नचैतन्याप्रकाश्यतया स्वावच्छिन्नचैतन्यप्रकाश्यत्वे सति प्रकाशमानत्वान्नव्याप्तिरित्याशयेनाह—**नेति**। यथा वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमादव्याप्तिनिरास एवमन्तःकरणस्य तद्धर्माणां कामादीनां च केवलसाक्षिविषयत्वेऽपि वृत्तिविषयत्वस्वीकारान्न तत्राव्याप्तिरित्याह—**एवं चेति**। आदिना प्रातिभासिकरजतादिसंग्रहः।

---

(१) जडाः सर्वे पदार्थाः अज्ञानावृता अतो न प्रकाशन्ते, तद्गोचरवृत्त्या आवरणनाशेन ते प्रकाशन्ते। यथा घटादयो जडाः स्वगोचरवृत्त्यैवावभासन्ते, तथैव वृत्तिरपि जडा न स्वतो भानयोग्या अतस्तद्गतावरणनिवृत्तिपूर्वकं तस्या भानं वक्तव्यम्। तथा च तदर्थं वृत्त्यन्तरानुसरणेऽनवस्था, वृत्त्यभावे भानाभाव इत्युभयतः पाशारज्जुरिति शङ्कस्याशयः। यद्यपि ब्रह्मातिरिक्तं सर्वमेव जडं, तथापि प्रत्यक्षतोऽनुभूयमानवैलक्षण्येन कस्यचित् किञ्चित्स्वभावविशेषादिकमास्थेयम्। यथा घटदीपकौ द्वावपि जडौ तथाऽपि घटस्य स्वभाने आलोकचक्षुःसन्निकर्षाद्यपेक्षा प्रदीपस्य तु आलोकानपेक्षा स तु घटं प्रकाशयन् स्वात्मानमपि प्रकाशयति, एवमेव वृत्तिरपि विनैव वृत्त्यन्तरं तदर्थं जाता तं प्रकाशयन्ती स्वात्मानमपि प्रकाशयिष्यतीति समाधातुर्वेदान्तिनोऽभिप्रायः।

न चान्तःकरणतद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिविषयत्वाभ्युपगमविरोध इति वाच्यम् । न हि वृत्तिं विना साक्षिविषयत्वं केवलसाक्षिवेद्यत्वं किन्त्विन्द्रियानुमानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वम्( १ ) । अत एवा( २ )हंकारटीकायामाचार्य्यैरहमाकारान्तःकरणवृत्तिरङ्गीकृता, अत एव च प्रातिभासिकरजतस्थले रजताकाराविद्यावृत्तिः साम्प्रदायिकैरङ्गीकृता, तथा चान्तःकरणतद्धर्मादिषु केवलसाक्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्वान्नाव्याप्तिः ॥

---

ननु वृत्त्यादिव्यावर्तककेवलपदविरोधात् कथं वृत्तिविषयत्वमभ्युपगन्तुं शक्यमित्याशङ्क्य परिहरति—**न चेति** । केवलपदं न वृत्तिनिरासार्थमपि त्विन्द्रियानुमानादिप्रमाणव्यापारनिवृत्त्यर्थम्, अतो न तद्विरोध इत्याह—**न हीति** । स्वोक्तार्थे पद्मपादाचार्यसम्मतिमाह—**अत एवेति** । यतो न वृत्तेः केवलपदव्यावर्त्यत्वमत एवाहंवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यविषयभावमापद्यत इत्यहङ्कारटीकायामाचार्यैरहमित्याकारान्तःकरणविषया वृत्तिरङ्गीकृतेत्यर्थः । **साम्प्रदायिकैरिति** । ( ३ )सर्वज्ञमुनिप्रमुखैः । अन्तःकरणादीनां वृत्तिविषयत्वे निर्विवादे सति फलितमव्याप्तिनिराकरणमुपसंहरति—**तथा चेति** ।

---

( १ ) केवलसाक्षिविषयत्वमिति योजना ।

( २ ) अहंकारटीकायामिति । 'अथातो ब्रह्मजिज्ञासा' इति सूत्रस्य यद्भाष्यं तस्य शारीरकभाष्यस्यापि या टीका पद्मपादाचार्यस्य पञ्चपादिकाख्या तस्यापि यद्विवरणं श्रीप्रकाशाचार्यकृतं सा अहंकारटीका तस्याम् । प्रथमवर्णके 'अहंवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यस्य विषयभावमापद्यते' इत्यत्र इदं विजयनगरसिरीजमुद्रितपुस्तके ५५ पृष्ठे २१ पङ्क्तौ द्रष्टव्यम् ।

( ३ ) सर्वज्ञमुनिः-संक्षेपशारीरकाचार्यः ।

तदयं निर्गलितोऽर्थः, स्वाकारवृत्त्युपहितप्रमातृचैतन्य-सत्ताऽतिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम् । तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभिव्यञ्जकवृत्तिजनने विनियोगः ।

---

श्रोतृसुखप्रतिपत्तये दत्तैर्विशेषणैर्निष्पन्नलक्षणं निष्कृष्य दर्शयति-**तदयमिति** । (१)तत्तस्य पूर्वोक्तस्यायम्, तत्तस्मादयमिति वा । स्वं विषयस्तदाकारा तद्गोचरा या वृत्तिस्तदुपहितं यत्प्रमातृचैतन्यं तद्रूपाया सत्ता तदतिरिक्ता सत्ता यस्य स तथा तस्य भावस्तत्त्वं तेन शून्यत्वे सति-तदतिरिक्तसत्तावत्त्वरहितत्वे सति-प्रत्यक्षयोग्यत्वं प्रत्यक्षव्यवहार-प्रयोजकमित्यर्थः । एवं ज्ञानगतस्य ज्ञेयगतस्य च प्रत्यक्षत्वस्य प्रयोजकमुक्तं तत्र तादृशवृत्त्यवच्छिन्नचैतन्यस्य तादृशविषयावच्छिन्न-चैतन्याभिन्नत्वं विषयगतप्रत्यक्षत्वस्य प्रयोजकमिति विवेकः । तत्र प्रत्यक्षस्य विषयस्य प्रत्यक्षज्ञानं चैतन्यमेव तच्चानादीति संयोगादिसन्निकर्षाणां क्व विनियोग इत्यपेक्षायामाह-**तत्रेति**—उक्तरीत्योभयप्रयोजक-सिद्धे सति, संयोगः संयुक्ततादात्म्यं संयुक्ताभिन्नतादात्म्यं [ (२)तादात्म्यमभिन्नतादात्म्य ] मित्येवं रूपाणां सन्निकर्षाणां घटतद्गतरूप-रूपत्वशब्दशब्दत्वावच्छिन्नचैतन्याभिव्यञ्जकवृत्त्युत्पादने विनियोग इत्यर्थः ॥

यस्या जनने एतेषां विनियोगः सा वृत्तिः कतिविधेत्यपेक्षायामाह-

---

( १ ) तदयमित्यस्य मूलस्थस्य पदस्य षष्ठ्या पञ्चम्या च समासं दर्शयति-तत्तस्येत्यादिना ।

( २ ) मुद्रितपुस्तके एतत्पाठः प्रमादभ्रष्टः प्रतिभाति, कखपुस्तकयोस्तु वर्तत एव ।

सा च वृत्तिश्चतुर्विधा(१) संशयो, निश्चयो, गर्वः, स्मरणमिति। एवंविधवृत्तिभेदेन एकमप्यन्तःकरणं मन इति बुद्धिरिति अहङ्कार इति चित्तमिति व्याख्यायते। तदुक्तम्—

मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्।
संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥ १ ॥

तच्च प्रत्यक्षं द्विविधम्। सविकल्पकनिर्विकल्पक-

---

**सा चेति।** सन्निकर्षजन्यवृत्त्यावच्छिन्नचैतन्यस्य प्रत्यक्षत्वाद् वृत्तेश्चान्तःकरणपरिणामत्वात्तद्घटकवृत्तिमदन्तःकरणनिरूपणं न प्रकृतासङ्गतमिति द्रष्टव्यम्। संशयाकारा निश्चयाकारा गर्वाकारा स्मरणाकारा, संशयाद्याकारेण परिणामरूपा वृत्तिश्चतुर्विधेत्यर्थः। एवं संशयादिविषयाकारपरिण(२)तविविधवृत्तिभेदेनैकमप्यन्तःकरणं संशयाकारवृत्तिमन्मन इत्यख्यायते, निश्चयाकारवृत्तिमद्बुद्धिरित्युच्यते, गर्वाकारवृत्तिमदहङ्कार इत्यभिधीयते, स्मरणाकारवृत्तिमच्चित्तमिति व्यपदिश्यते इत्यर्थः। स्वोक्तविभागे पूर्वाचार्यसंमतिमाह—**तदुक्तमिति।** वृत्तिभेदेन तत्तद्वृत्तिमतो भेदादन्तःकरणं मन आदिभेदेन चतुर्विधम्, संशयादयोऽमी विषयाः, एतेषां विषयत्वे एतदाकारवृत्तीनामप्येतन्नामकत्वान्न प्रकृतप्रतिकूलतेति भावः।

प्रत्यक्षघटकवृत्तिस्वरूपमभिधाय विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यरूपमुक्तं प्रत्यक्षं विभज्य दर्शयति-**तच्चेति।** तत्र प्रथमोद्दिष्टत्वात्सकलवादिसंमतत्वादखिलव्यवहारप्रयोजकत्वादादौ स-

---

(१) चक्षुःसंयोगादिना घटाद्याकारा या वृत्तिर्जायते, सा संशयरूपा निश्चयरूपा गर्वरूपा स्मरणरूपेति तस्याश्चातुर्विध्यमित्यर्थः।

(२) णाम इति पाठः गपुस्तके।

भेदात् । तत्र सविकल्पकं वैशिष्ट्यावगाहिज्ञानं यथा घटमहं जानामीत्यादि ज्ञानम् । निर्विकल्पकं तु संसर्गानवगाहिज्ञानम् । यथा—सोऽयं देवदत्तः, तत्त्वमसीत्यादिवाक्यजन्यज्ञानम् ॥

ननु शाब्दमिदं ज्ञानं न प्रत्यक्षमिन्द्रियाजन्यत्वादिति

---

विकल्पकं लक्षयति । **तत्रेति** । तत्र तयोर्मध्ये । विकल्पो वैशिष्ट्यं तेन सह वर्तत इति सविकल्पकं वैशिष्ट्यविषयकमित्यर्थमभिप्रेत्याह—**वैशिष्ट्यावगाहीति** । (१)तथात्वमिच्छादावतिव्याप्तमित्यत उक्तम्—**ज्ञानमिति** । (२)तत्त्वं तु निर्विकल्पकेऽतिव्याप्तमित्यत उक्तं **वैशिष्ट्यावगाहीति** । उदाहरणमाह—**यथेति** । घटमहं जानामीत्यादिज्ञानं घटरूपविशेषणविशिष्टज्ञानावगाहिज्ञानत्वाद्वैशिष्ट्यावगाहीत्यर्थः । निर्गतो विकल्पो यस्मादिति निर्विकल्पकमित्यर्थमभिप्रेत्य द्वितीयं लक्षयति—**निर्विकल्पकं त्विति** । संसर्गो विशेषणविशेष्यसम्बन्धो वैशिष्ट्यमिति यावत् । उदाहरणमाह—**यथेति** । दे(३)शकालोपलक्षितदेवदत्तलक्षणाभेदविषये सोऽयं देवदत्त इतीन्द्रियजन्यैक्यप्रत्यक्षे सन्निकर्षवशादुपलक्षकदेशकालादेरपि भानसम्भवात्, शाब्दे तु ज्ञाने तात्पर्यविषयस्यैव भाननियमात्, अभेदमात्रविषयत्वाच्छाब्दमेवैतदुदाहरणमित्यभिप्रेत्याह—**वाक्यजन्येति** । प्रकृष्टप्रकाशश्चन्द्रः, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्यवान्तरवाक्यमादिशब्दार्थः ॥

ननु निर्विकल्पकप्रत्यक्षं लक्षयित्वा वाक्यजन्यज्ञानस्य तल्लक्ष्य-

---

( १ ) तथात्वं—वैशिष्ट्यावगाहित्वम् । ( २ ) तत्त्वं—ज्ञानत्वम् ।

( ३ ) ननु सोऽयं देवदत्त इत्यैक्यप्रत्यभिज्ञयैव वाक्यप्रयोगात् देशाद्युपलक्षितदेवदत्तलक्षणाभेदविषयम् इन्द्रियजन्यज्ञानमप्यस्ति निर्विकल्पकप्रत्यक्षम्, तद् विहाय कथं शाब्दमेवोदाह्रियते इत्याशङ्कां कृत्वा पश्चादयं ग्रन्थो योजनीयः ।

चेत् । न । न हि इन्द्रियजन्यत्वं प्रत्यक्षत्वे तन्त्रं दूषितत्वात् । किन्तु योग्यवर्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमित्युक्तम् । तथा च सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया बहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन देवदत्तावच्छिन्नचैतन्ययोरभेदेन सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य प्रत्यक्ष-

---

त्वाभिधानमत्यन्तासङ्गतमित्याशयेन शङ्कते—**नन्विति ।** (१)शाब्दज्ञानस्य इन्द्रियाजन्यत्वेऽपि निरुक्तप्रत्यक्षत्वप्रयोजकसत्त्वात् सन्निहितविषयकवाक्यजन्यज्ञानस्यापि प्रत्यक्षत्वाभ्युपगमान्नासङ्गतिरित्याशयेनाह-**न हीति ।** इन्द्रियजन्यत्वस्य मनोरूपेन्द्रियजन्यानुमित्यादावतिव्याप्त्यादिप्रदर्शनेन दूषितत्वात् । उक्तं विस्मृत्य पृच्छति-**किन्त्विति ।** प्रोक्तं स्मारयति—**योग्येति ।** यद्यपि प्रमाणचैतन्यस्य योग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं पूर्वमुक्तम्, तथाऽपि तत्त्वे योग्यवर्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वे च विशेषाभावादेव(२)मुक्तम् । तथा च प्रमाणचैतन्यस्य योग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं पूर्वमुक्तमिति भावः । तथा चेन्द्रियजन्यत्वस्याप्रयोजकत्वे निरुक्तस्य प्रयोजकत्वे च सतीमं फलितमित्याह—**तथा चेति ।**

नन्वेवं लौकिकोदाहरणसम्भवेऽपि वैदिकं न सम्भवति 'विज्ञातारमरे केन विजानीयात्' इत्यादिश्रुत्या प्रमातुर्विषयत्वनिरासात् । तत्पदार्थाभिन्नत्वं पदार्थप्रमातृचैन्यस्य विषयावच्छिन्नचैतन्यत्वाभावान्निरु-

---

(१) 'शाब्दज्ञानस्य' इति पाठः कखपुस्तकयोर्नास्ति ।

(२) एवं-योग्यवर्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्त्वम्-इत्यभिप्रायः ।

त्वम्। एवं तत्त्वमसि इत्यादिवाक्यजन्यज्ञानस्यापि। तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वात्।

---

क्प्रयोजकस्यासत्त्वादित्याशङ्कयाह-**एवमिति**। तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्यापि (१)सन्निकृष्टतत्त्वंपदलक्ष्यविषयतयोक्तवाक्यजन्यान्तःकरणवृत्त्यभ्युपगमेन लक्ष्यचैतन्यस्य वृत्त्यवच्छिन्नचैतन्यस्याभेदेन प्रत्यक्षत्वमित्यर्थः। **तत्र**—तस्मिञ्ज्ञाने। प्रमातृपदेन लक्ष्यं ग्राह्यं त्वंपदलक्ष्यात्तत्पदलक्ष्यस्याभिन्नत्वादे(२)वमुक्तम्। (३)श्रुतिस्तु फलव्याप्यत्वनिषेधपरा।

---

(१) अयं भावः-तत्त्वमसीत्येवं शब्दश्रवणे सर्वज्ञत्वकिञ्चिज्ज्ञत्वाकर्तृत्वकर्तृत्वादिविशिष्टाभेदविषयं ज्ञानं न जायते, किन्तु तत्त्वमिति पदद्वयलक्ष्यस्वरूपविषयमेव जायते कर्तृत्वाकर्तृत्वादिविरुद्धधर्मवतोरैक्यायोगात्। तत्त्वं पदलक्ष्यञ्च केवलं चैतन्यं सन्निकृष्टमेवेति उक्तवाक्यजन्यान्तःकरणवृत्त्यभ्युपगमे न किञ्चिद्बाधकम्। तथा च लक्ष्यचैतन्यस्य वृत्त्यवच्छिन्नचैतन्यस्य च एकादेशस्थितोपाधिद्वयावच्छिन्नत्वात् अभेदे सति प्रत्यक्षत्वं सुस्थमेव।

(२) प्रमातुरेव विषयतयेत्याद्युक्तमित्यर्थः।

(३) ननु तत्त्वंपदलक्ष्यस्य ब्रह्मणः शास्त्रजन्यज्ञानविषयत्वे 'विज्ञातारमरे केन विजानीयात्' इत्यादिश्रुतीनां का गतिरित्याशङ्कय समाधत्ते-श्रुतिस्तु फलव्याप्यत्वनिराकरणपरेति। तथा चोक्तम्—

फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता॥

इन्द्रियसन्निकर्षद्वारा अन्तःकरणस्य घटाद्याकारवृत्तौ सत्यां तत्र चैतन्यं प्रतिबिम्बते, तच्च चैतन्यं 'फलम्' इत्यभिधीयते। चैतन्यप्रतिबिम्बयुता च सा वृत्तिः विषयं व्याप्नोतीति फलरूपचैतन्यस्यापि व्याप्तिर्जाता, तथा च घटादीनां जडानां फलव्याप्यत्वम्। तच्च ब्रह्मणि न सम्भवति जडत्वापत्तेः। तत्त्वमस्यादिवाक्यश्रवणसमनन्तरजायमानया वृत्त्या ब्राह्मणो व्याप्यत्वे न कापि हानिः, प्रत्युत तद्विषयाज्ञाननिवृत्तिं विना भानासम्भवात् अज्ञाननाशार्थं वृत्तिः स्वीकार्यैवेति कारिकाऽभिप्रायः।

ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम्। उच्यते। वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रम्, अनभिमतसंसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः, किन्तु तात्पर्यविषयत्वम्॥

प्रकृते च 'सदेव सोम्येदमग्र आसीत्' छा०-६-२-१ इत्युपक्रम्य 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' छा०-६-८-७ इत्युपसंहारे विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्यमवसितमिति कथं तात्पर्याविषयसंसर्गमवबोधयेत्।

---

ननु सोऽयं देवदत्त इत्यादिवाक्यजन्यं ज्ञानं संसर्गावगाहिवाक्यजन्यज्ञानत्वात् गामानयेति वाक्यजन्यज्ञानवत्। उक्तवाक्यजन्यं ज्ञानं न निर्विकल्पकं संसर्गावगाहित्वात्तद्वदिति वेत्याशयेन शङ्कते-**नन्विति**। भवेदेवं यदि वाक्यजन्यज्ञानविषयत्वे पदार्थसंसर्गत्वं तन्त्रं भवेन्न तु तथा, तथात्वे हि भोजनप्रकरणे सैन्धवमानयेत्यत्रानभिमतस्याश्वादिसंसर्गस्यापि (१)तत्त्वापत्तेरित्याशयेनाह—**उच्यत इति**। ननु पदार्थसंसर्गत्वस्य तत्र तन्त्रत्वाभावे किं तत्र तन्त्रमिति पृच्छति-**किन्त्विति**। यस्तात्पर्यविषयः स एव वाक्यजन्यज्ञानगोचरः, स च संसर्गोऽसंसर्गो वेति विशेषो नादर्तव्य इत्याह—**तात्पर्येति**।

प्रकृते तु पिण्डमात्रे लौकिकवाक्यस्येव उपक्रमोपसंहारादितात्पर्यलिङ्गैः तत्त्वमस्यादिवेदान्तवाक्यानामद्वितीये विशुद्धे ब्रह्मणि तात्पर्यावधारणादसंसर्गस्यैव तात्पर्यगोचरत्वात्सोऽयमित्यादिवाक्यानां तात्पर्याविषयसंसर्गावगाहित्वं बाधितमित्याशयेनाह—**प्रकृते इति**। ननु तत्त्वमस्यादिवाक्यानां प्रसिद्धमखण्डार्थत्वं विहाय कथं संसर्गानवगाहि-

---

(१) तत्त्वापत्तेः-वाक्यजन्यज्ञानविषयत्त्वापत्तेः।

इदमेव तत्त्वमस्यादिवाक्यानामखण्डार्थत्वम्, यत्संसर्गानवगाहियथार्थज्ञानजनकत्वमिति॥ तदुक्तम्—

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्।
उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता॥ १॥

प्रातिपदिकार्थमा(१)त्रपरत्वं वाऽखण्डार्थतत्वमिति चतुर्थपादार्थः॥

तच्च प्रत्यक्षं पुनर्द्विविधं जीवसाक्षि ईश्वरसाक्षि चे-

---

ज्ञानजनकत्वमपूर्वमुक्तमित्याशङ्क्याह—**इदमेवेति**। (२)एवकारोऽप्यर्थे। तेन(३) च प्रातिपदिकार्थमात्रपरत्वमखण्डार्थमित्यस्य समुच्चयः। तत्राचार्य्यसम्मतिमाह—**तदुक्तमिति**। चित्सुखाचार्य्यैरिति शेषः। गिरां तत्त्वमस्यादिवाक्यानां संसर्गासङ्गिसम्यग्धीहेतुता या सेयमखण्डार्थतोक्ता तदनवगाहियथार्थज्ञानहेतुत्वं यत्तदिदमखण्डार्थत्वमुक्तमित्यर्थः। तासां प्रातिपदिकार्थताऽखण्डार्थतोक्तेति लक्षणस्य संसर्गपरे वाक्येऽतिव्याप्तिस्तत्रापि प्रातिपदिकार्थप्रतिपादकत्वसत्त्वादित्याशङ्क्याह—**प्रातिपदिकार्थमात्रपरत्वमिति**। तथा च तत्र तन्मात्रप्रतिपादकत्वाभावान्नातिव्याप्तिरिति भावः।

उक्तप्रत्यक्षज्ञानस्य साक्षिद्वैविध्येन द्वैविध्यमाह—**तच्चेति**। संसर्गावगाहित्वानवगाहित्वभेदेऽपि ज्ञानं चैतन्यरूपमेकमेव, तच्च जीवसाक्षीश्वरसाक्षिभेदेन द्विविधमित्यर्थः। **यत्तु** साक्षिपदं तज्जन्यपरम्,

---

(१) यद्वा तत्प्रातिपदिकार्थतेति पादस्य प्रातिपदिकार्थमात्रपरत्वमिति मात्रपदपूरणपूर्वकव्याख्यानाभावे संसर्गविशिष्टप्रमाजनके बोधेऽतिव्याप्तिः। तासां गिरां प्रातिपदिकार्थता तत्प्रातिपदिकार्थता, इत्येवंभूतलक्षणस्य तत्र सत्त्वादित्यर्थः।

(२) इदमेव तत्त्वमस्यादिवाक्यानामखण्डार्थत्वमित्यत्रस्थ एवकारोऽप्यर्थ इत्यर्थः। अवधारणार्थं एवकारे प्रातिपदिकार्थमात्रपरत्वरूपलक्षणान्तरस्यानवकाशादिति। (३) तेन च-अप्यर्थकेन एवकारेण च।

ति। तत्र जीवो नामान्तःकरणावच्छिन्नं चैतन्यम्। तत्साक्षि तु अन्तःकरणोपहितं चैतन्यम्। अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः। विशेषणं च कार्यान्वयि व्यावर्तकम्। उपाधिश्च कार्य्यानन्वयी व्यावर्तको वर्त-

---

तथा च जीवसाक्षिजन्यमीश्वरसाक्षिजन्यमिति द्विविधमित्यर्थइ ति केचित्(१)। तन्नोपादेयम्। ज्ञानस्य चैतन्यरूपत्वप्रतिपादनात्(२)। तत्र जीवसाक्षिनिरूपणस्य जीवनिरूपणाधीनत्वाज्जीवस्वरूपनिरूपणपूर्वकं तत्साक्षिस्वरूपं लक्षयति—**तत्रेति**। जीवसाक्षीश्वरसाक्षिणोर्मध्ये। अन्तःकरणस्य विशेषणत्वे चैतन्यस्य जीवत्वं तस्योपाधित्वे तस्य तत्साक्षित्वमिति तयोर्भेदः, एतदेव स्फोटयति—**अन्तःकरणस्येति**। विशेषणोपाध्योर्वर्त्तमानत्वे सति व्यावर्त्तकत्वं यद्यपि समानम्, तथाऽपि कार्यान्वयित्वतदनन्वयित्वभेदात्तद्विशिष्टतदुपहितचैतन्ययोरपि भेद इत्याशयेनाह—**विशेषणं चेति**। कार्यान्वयि व्यावर्तकं वर्तमानं चेत्यपि बोध्यम्। तथा च कार्यानवयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वं विशेषणत्वम्। कार्यानन्वयित्वे सति यथोक्तत्वमुपाधित्वम्। कार्यपद-

---

(१) शिखामणिकाराः।

(२) चैतन्यस्य च जन्यत्वायोगादिति शेषः। वस्तुतस्तु ज्ञानस्य स्वरूपतोऽजन्यत्वेऽपि वृत्तिरूपज्ञानस्य वृत्तिविशिष्टज्ञानस्य वा जन्यत्वं स्वीकृतमेव, तथा च जीवसाक्षिजन्यमीश्वरसाक्षिजन्यमिति भेदः साधीयान्। तथैव मणिप्रभाकारेण व्याख्यातम्—जीवस्य यः साक्षी तज्जन्यमित्यादि। तथात्वे एव 'एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्य'मित्युत्तरग्रन्थसङ्गतिः। अन्यथा—जीवसाक्षि ईश्वरसाक्षि चेति वाक्येन साक्षिद्वैविध्यप्रतिपादने प्रत्यक्षज्ञानद्वैविध्यं निरूपितमित्युत्तरग्रन्थासङ्गतिः स्फुटैव। तच्च प्रत्यक्षं पुनर्द्विविधमिति स्वशब्देन प्रक्रमता अकस्माज्जीवेश्वरसाक्षिणो निरूपणं प्रमत्तप्रगानवत्स्यात् अतः शिखामणिकारखण्डनेन स्वकौशलं प्रदर्शयता दीपिकाकृता नेत्रे पिधाय लेखिनी सञ्चालितेति दृश्यते।

मानश्च। रूपविशिष्टो घटोऽनित्य इत्यत्र रूपं विशेषणम्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुल्युपाधिः। अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते॥

प्रकृते चान्तःकरणस्य जडतया विषयभासकत्वायो-

---

मत्रावच्छेद्यान्वययोग्यपरम्। विशेषणोदाहरणमाह—रूपेति। रूपस्य कार्यान्वयित्वादिसत्त्वाद्विशेषणत्वम्। उपाध्युदाहरणमाह—कर्णेति। कर्णशष्कुल्याः कार्यानन्वयित्वादिसत्त्वादुपाधित्वम्। स्वोक्तोपाधेर्नैयायिकैर्व्यवह्रियमाणां संज्ञामाह—अयमेवेति॥

नन्वस्तु कर्णशष्कुल्यादेरुपाधित्वमन्तःकरणस्य तु (१)तत्त्वं प्रयोजनशून्यम्। न हि प्रमाता विषयभासनाय स्वसाक्षिणमपेक्षते चक्षुरादिजन्यवृत्त्यवच्छिन्नचैतन्येनैव विषयप्रकाशसम्भवादित्याशङ्क्य अन्तःकरणस्य जडतया विषयभासकत्वायोगाद्, वृत्तीनां नानात्वेन तदवच्छिन्नचैतन्यस्याप्यनेकतया समस्तविषयानुसन्धातृत्वानुपपत्तेः, प्रमातुश्चान्तःकरणावच्छिन्नत्वेन विषयानुसन्धानार्थमन्यापेक्षत्वात्तदन्वितस्य ब्रह्माभिन्नस्य साक्षिण आवश्यकत्वात्तदुपाधित्वमन्तःकरणस्यावश्यमभ्युपेयमित्याशयेनाह—प्रकृत इति। ननु जीवसाक्षिणो ब्रह्माभेदेन स्वयंप्रकाशत्वेन सर्वविषयानुसन्धातृत्वाभ्युपगमे ब्रह्मण एकत्वात्तदभिन्नसाक्षिणाऽपि एकत्वाच्चैत्रावगते मैत्रस्याप्यनुसन्धानप्रसङ्ग इत्याशङ्क्या-

---

(१) तत्त्वम्–उपाधित्वम्। अन्तःकरणस्य जीवसाक्षिचैतन्योपाधित्वं निष्प्रयोजनम्। यदि प्रमाता विषयभासनाय स्वसाक्षिणमपेक्षेत, स्यात् सप्रयोजनकत्वम्। प्रमाता हि चक्षुरादिजन्यवृत्त्यवच्छिन्नचैतन्येनैव विषयं भासयिष्यति इति चेन्न। जडेनान्तःकरणेन विषयावभासायोगात्, नानावृत्त्यवच्छिन्ननानाचैतन्येन समस्तविषयानुसन्धातृत्वानुपपत्तेः, प्रमात्रा च। असहायेन विषयानुसन्धानं न स्यात्। अतः प्रमात्रन्वितो ब्रह्माभिन्नः अन्तःकरणोपहितः साक्षी स्वीकार्यः। तथा चान्तःकरणस्य जीवसाक्षिचैतन्योपाधित्वमावश्यकमिति तात्पर्यम्।

गेन विषयभासकचैतन्योपाधित्वम्। (१)अयं च जीवसाक्षी प्रत्यात्मं नाना। एकत्वे मैत्रावगते। चैत्रस्याप्यनुसन्धानप्रसङ्गः। ईश्वरसाक्षि तु मायोपहितं चैतन्यम्। तच्चैकम्। तदुपाधिभूतमायाया एकत्वात्। 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतौ मायाभिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया वोपपत्तेः ॥

---

पाधिभेदेन तस्य नानात्वस्वीकाराददोष इत्याह—**अयं चेति**। एवं जीवसाक्षिणं निरूप्येश्वरसाक्षिणं निरूपयति-**ईश्वरसाक्षीति**। तदपि जीवसाक्षिवन्नाना किं वैकमित्यपेक्षायामाह-**तच्चैकमिति**। तत्र हेतुमाह—**तदिति**। अनाद्यनिर्वचनीयत्वे सति विपर्ययोपादानभूता विक्षेपशक्तिप्रधाना माया। ननु तस्या एकत्वं मायाभिरिति श्रुतिविरुद्धमित्याशङ्क्याह—**इन्द्र इति**। इन्द्रो निरङ्कुशैश्वर्यः परमात्मा मायाभिः पुरुरूपो बहुरूप ईयते प्रतीयते, यथा वह्न्यादेर्दाहकत्वप्रकाशकत्वादिकार्यदर्शनात्तदनुकूलाः शक्तिविशेषाः कल्प्यन्ते तथा जगद्रूपविचित्रकार्यदर्शनान्मायायास्ते कल्प्यन्त इति तदभिप्रायतयेत्यर्थः ॥

ननु मुख्यार्थपरित्यागे किं कारणमित्याशङ्क्यानेकश्रुतिस्मृतिगतैक-

---

(१) अयञ्चेति। यद्यपि सर्वेषु पुस्तकेषु अयञ्च जीवसाक्षीति पुंल्लिङ्गप्रयोग उपलभ्यते। तथाऽपि इदञ्च जीवसाक्षि इति नपुंसकप्रयोगेण भाव्यम्, जीवसाक्षीश्वरसाक्षिणोः प्रत्यक्षयोश्चैतन्ययोश्च नियतनपुंसकत्वात्। यद्यपि कथञ्चित् अयञ्चेत्यस्योपपत्तिः शक्यते कर्तुं तथापि टीकायामग्रे जीवसाक्षिणं निरूप्येश्वरसाक्षिणं निरूपयतीति सर्वेषु पुस्तकेषूपलभ्यते, तत्तु दुरुपपादमेव मूले 'ईश्वरसाक्षि तु' इत्यत्र नपुंसकप्रयोगोपलब्धेः। तथा च विशेष्यनिघ्नस्य साक्षिपदस्यात्र क्लीबे प्रयोग आवश्यकः। अथवा कालीनादिपदवत् क्षन्तव्यमिति।

जगती
'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।' श्वे० ४।१०। 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥' श्वे० ४।५। 'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥ १ ॥' इत्यादि श्रुतिस्मृतिषु एकवचनबलेन लाघवानुगृ-

वचनसिद्धतदेकत्वनिश्चय एवेत्याह—**मायां त्विति**। नन्विदमेकवचनं जात्यभिप्रायकं किं न स्यादित्याशङ्क्यैतच्छङ्कानिवर्तकैकपदयुक्तां श्रुतिं पठति—**अजामिति**। जन्मशून्यामनादिभूतां स्वसमानजातीयेतरप्रकृतिशून्यामेकां लोहितशुक्लकृष्णां रजःसत्वतमोमयीं बह्वीः प्रजास्समानरूपास्त्रिगुणात्मिकाः सृजमानाम् एकोऽजन्मा जीवो जुषमाणः सेवमानोऽनुशेते तत्तादात्म्यापन्नो भवति जहात्येनां भुक्तभोगामजोऽन्य ईश्वर इत्यर्थः। मायाया एकत्वं श्रुतितात्पर्यसिद्धमिति कथं ज्ञातं श्रुतितात्पर्यस्य दुरूहत्वादित्याशङ्क्य स्मृतिकारानुसारेणेत्याशयेन पराशरस्मृतिं पठति—**तरतीति**। यस्मिन् परात्मनि हृदि निवेशिते वृत्त्यारूढे कृते योगी अविद्यां तरति तस्मै ज्ञानस्वरूपायामेयाय वृत्त्यवच्छिन्नचैतन्यगोचराय नमः। अविद्यां विशिनष्टि—**विततामिति**। प्रपञ्चाकारेण परिणतत्वात् सर्वत्र व्याप्तामित्यर्थः। ननु तन्निवृत्तावपि नानर्थनिवृत्तिः, सर्वानर्थभूताया मायाया अवशिष्टत्वादित्याशङ्क्याह—**मायामिति**। स्वाश्रयाव्यामोहकत्वव्यामोहकत्वविशेषेऽपि वस्तुतो न(१)तयोर्भेद इत्याशयः। ननु स्मृतावपि जातावेकवचनस्य सम्भवादेकपदस्यामुख्यार्थकताया अपि सुवचत्वात्कथं तदेकत्वनिश्चय इत्याशङ्क्याह—**लाघवेति**। 'अविद्यायामन्तरे वर्तमानाः' (का० १।२।५) 'मम माया दुरत्यया' (भ० गी० ७।१४) इत्यादिश्रुतिस्मृतीनाम् आदि-

(१) मायाऽविद्ययोः।

हीतेन मायाया एकत्वं निश्चीयते। ततश्च तदुपहितं चैतन्यम् ईश्वरसाक्षि तच्चानादि तदुपाधेर्मायाया अनादित्वात् ॥

मायावच्छिन्नं चैतन्यं परमेश्वरः, मायाया विशेषणत्वे ईश्वरत्वमुपाधित्वे साक्षित्वमिति ईश्वरत्वसाक्षित्वयोर्भेदः,

---

पदेन सङ्ग्रहः। उपसंहरति—**ततश्चेति**। यथोपाधिभूतमायाया एकत्वात्तस्यैकत्वं तथा तस्या अनादित्वात्तस्याऽनादित्वमपीत्याह—**तच्चेति**। तच्चैतन्यमनाद्यपीत्यर्थः ॥

ईश्वरसाक्षिज्ञानस्येश्वरज्ञानापेक्षत्वादाह—**मायेति**। पूर्ववदत्रापि मायाया विशेषणत्वोपाधित्वाभ्यामीश्वरत्वसाक्षित्वयोर्भेद इत्याह—**मायाया इति**। तथा च यथा नास्ति (१)पाचकपाठकयोर्भेदः, किन्तु पाचकत्वपाठकत्वयोस्तद्वन्नेश्वरतत्साक्षिणोर्भेदोऽपि त्वीश्वरत्वसाक्षित्वयोरित्यर्थः।

नन्वु मायाया एकत्वाद्यथेश्वरसाक्षिण एकत्वं तथा तदवच्छिन्नस्याप्येकत्वावश्यंभावात्कथं तस्य ब्रह्मादिरूपेण भेदः(२)। तथा च तस्य विशेषणभेदमूलत्वात्तद्भेदे च तस्या एवोपाधितया तदुपहितस्याप्ये-

---

(१) यथा यो हि पाचकः स एव पाठकश्चेत् पाचकव्यक्तेः पाठकव्यक्तिर्न भिन्ना, तथाऽपि तत्स्थे पाचकत्वपाठकत्वे भिन्ने एव। एवमीश्वरतत्साक्षिणोः जीवसाक्षिणोश्च न भेदः, किन्तु जीवत्वसाक्षित्वरूपयोर्धर्मयोरेव भेदः।

(२) भेदः तस्येति पाठो गपुस्तके। खपुस्तके यद्यपि तथाऽपि तस्येति पाठः। परञ्च तदग्रवर्ती उपास्य तु त्रिगुणेत्यादि पाठः। सर्वेषु पुस्तकेषु—तस्यैवोपाधितया तदुपहितस्याप्यनेकत्वौचित्यात् कथं तदेकता इति पाठः दृश्यते, तथाऽप्यसङ्गत एव सः प्रतिभाति। अस्मदुपन्यस्तपाठस्यायमर्थः—तथा च तस्य—ब्रह्मादिभेदस्य, विशेषणभेदमूलायत्तत्वात् तत्र च तस्या मायाया एव उपाधितया तदुपहितस्याप्येकत्वौचित्यात्कथं तदनेकता—ब्रह्माद्यनेकतेत्याशङ्क्येत्यादिर्ज्ञेयः।

न तु धर्मिणोरीश्वरतत्साक्षिणोः॥

स च परमेश्वर एकोऽपि स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वर इत्यादिशब्दवाच्यतां लभते॥

नन्वीश्वरसाक्षिणोऽनादित्वे 'तदैक्षत बहु स्यां प्रजायेय' छा० ६।२।१ इत्यादिना सृष्टिपूर्वसमये परमेश्वरस्या-

---

कत्वौचित्यात्कथं तदनेकतेत्याशङ्क्य यथा मायोपाधिगतगुणभेदाभिप्रायेण तदनेकत्वव्यपदेशस्तथा तद्गतगुणावच्छेदेनेश्वरभेदो, न तु वस्तुत इत्याशयेनाह—**स चेति**। उपाधिपदमत्र विशेषणपरम्। तथा च मायावच्छिन्नेश्वरचैतन्यमेवोद्भूतसत्त्वगुणमायावच्छिन्नं पालयितृ-विष्णु-नारायणादिशब्दवाच्यतां भजते, तदेवोद्भूतरजोगुणमायावच्छिन्नं स्रष्टृ—ब्रह्म—विधात्रादिशब्दप्रतिपाद्यतां लभते, तदेवोद्भूततमोगुणमायावच्छिन्नं संहर्तृ-महेश्वर-रुद्रादिशब्दाभिधेयतामधिगच्छति। अथ योह खलु वा वास्य राजसोंऽशोऽसौ योऽयं ब्रह्मा, अथ योह खलु वा वास्य तामसोंऽशोऽसौ स योऽयं ब्रह्मा, अथ योह खलु वा वास्य सात्त्विकोंऽशोऽसौ स योऽयं विष्णुरिति मैत्रेयोपनिषदि तथैवावगतेरित्यर्थः। उपास्यं तु त्रिगुणमायावच्छिन्नमेव विष्णुमहेशगणेशदिनेशदुर्गारूपेण स्थितं न त्वेकैकगुणप्रधानमायाविशिष्टमुपास्यं तस्य निरङ्कुशैश्वर्यवत्त्वाश्रवणादिति द्रष्टव्यम्।

(१) नन्वीक्षणस्येश्वरसाक्षिणः सृष्टिपूर्वकालीनत्वप्रतिपादनात्तस्यानादित्वं बाधितम्, तस्य सादित्वे ईश्वरस्याप्यनादित्वं बाधितमिति शङ्कते—**नन्विति**। यथाऽभिव्यञ्जकान्तःकरणवृत्तेः सादित्वेन तत्प्रति-

---

(१) समानाधिकरणे षष्ठ्यौ। तथा च ईश्वरसाक्षिण ईक्षणस्य सृष्टिपूर्वकालिकत्वप्रतिपादनात् कालिकावधिरहितत्वस्यानादित्वस्याभाव ईश्वरसाक्षिणि तस्य क्षणस्य सादित्वे तद्विशिष्टस्येश्वरस्यापि सादित्वमिति शङ्कते—नन्विति।

गन्तुकमीक्षणमुच्यमानं कथमुपपद्यते ? । उच्यते । यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते, तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतमायाया वृत्तिविशेषा(१) इदमिदानीं स्रष्टव्यमिदमिदानीं पालयितव्यमिदमिदानीं संहर्तव्यमित्याद्याकारा जायन्ते । तासां च वृत्तीनां सादित्वात्तत्प्रतिबिम्बितं चैतन्यमपि सादीत्युच्यते । एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यम् । प्रत्यक्षत्वं च ज्ञेयगतं ज्ञप्तिगतं चेति निरूपितम् ॥

तत्र ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्व(२)मेव

---

बिम्बितजीवसाक्षिस्वरूपज्ञानस्यापि सादित्वं तथेक्षणाद्यभिव्यञ्जकमायावृत्तेः सादितया तत्प्रतिबिम्बितेश्वरसाक्षिचैतन्यस्येक्षणादिज्ञानस्वरूपस्यापि सादित्वमतो न तयोः स्वतोऽनादित्वे बाधकमित्याशयेनाह-**उच्यत इति** । एवं साक्षिद्वैविध्यप्रतिपादनात्तस्यैव तत्तद्वृत्त्यनुगतस्य ज्ञानत्वात्प्रत्यक्षज्ञानद्वैविध्यमपि सिद्धमित्याह-**एवमिति** । एवं साक्षिद्वैविध्यनिरूपणाज्जीवेश्वरसाक्षिजन्यप्रत्यक्षभेदेन प्रत्यक्षज्ञानस्य द्वैविध्यं सिद्धमिति तु न(२) रम्यं ज्ञप्तिगतं प्रत्यक्षत्वं चित्वमेवेत्युत्तरग्रन्थविरोधात् । कश्चिद्विशेषमभिधातुं वृत्तमनुवदति-**प्रत्यक्षत्वमिति** ।

**तत्र**-ज्ञेयगतज्ञप्तिगतप्रत्यक्षत्वयोर्मध्ये । नन्वनुमित्यादावतिव्या-

---

(१) जायन्ते इत्यनेनान्वयः ।

(२) वस्तुतस्त्विदमेव रम्यं तच्च प्रत्यक्षं पुनर्द्विविधमिति प्रकृतानुसारात् तत्र जीवसाक्षीति पदस्य जीवसाक्षिजन्यपरस्यैवौचित्यं दर्शितमधस्तादस्माभिः । उत्तरग्रन्थविरोधविभीषिकाऽपि धूलिप्रक्षेपरूपैवेत्यपि दर्शितम् ।

(३) चित्त्वं-स्वप्रकाशत्वम् । न चास्य लक्षणस्य भ्रमेऽतिव्याप्तिः, भ्रमज्ञानस्यापि स्वांशे (ज्ञानांशे) प्रत्यक्षतया सामान्यलक्षणस्य लक्ष्यत्वात् । विशेषलक्षणस्यातिव्याप्तिनिरासस्तु मूलकृतैव अबाधितविशेषणोपादेन करिष्य इति ।

पर्वतो वह्निमानित्यादावपि वह्न्याद्याकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वात्। तत्तद्विषयांशप्रत्यक्षत्वं तु पूर्वोक्तमेव। तस्य च भ्रान्तिरूपप्रत्यक्षे नातिव्याप्तिः, भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनेन तस्यापि लक्ष्यत्वात्। यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यं तदा(१)पूर्वोक्तलक्षणेऽबाधितत्वं विषयविशेषणं देयम्। शुक्तिरूप्यादिभ्रमस्य

---

प्तिरित्याशङ्क्य सर्वत्रापि तत्तदाकारवृत्त्युपहितचैतन्यस्य स्वात्मांशे प्रत्यक्षत्वेन सर्वस्यापि ज्ञानस्य लक्ष्यत्वान्नातिव्याप्तिरित्याह-**पर्वत इति** 'यत्साक्षादपरोक्षाद् ब्रह्म' ( बृ० ३-४-१ ) इत्यादिश्रुत्या चित्त्वस्यैव प्रत्यक्षत्वाभिधानाच्चिद्रूपस्य ज्ञानस्य स्वात्मांशे स्वप्रकाशतया सर्वस्यापि ज्ञानस्य प्रत्यक्षत्वादित्यर्थः। नन्वनुमित्यादौ प्रत्यक्षत्वव्यवहारः कुतो नास्तीत्याशङ्क्य तत्तद्विषयांशनिरूपितप्रत्यक्षत्वप्रयोजकस्य पूर्वोक्तस्याभावादित्याशयेनाह-**तत्तदिति**। ननु योग्यविषयस्य स्वगोचरवृत्त्युपहितप्रमातृचैतन्यसत्ताऽतिरिक्तसत्ताशून्यस्य(२)शुक्तिरूप्यादिज्ञानेऽतिव्याप्तिरित्याशङ्क्याह-**तस्येति**। प्रत्यक्षप्रमाणनिरूपणे भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनमनुपपन्नं मत्वाऽऽह-**यदेति**। **प्रत्यक्षप्रमाया**-ज्ञेयगतस्य यथार्थप्रत्यक्षस्येत्यर्थः। नन्वबाधितत्वं पारमार्थिकत्वम्? उत सत्त्वमात्रम्? नाद्यः, घटादिज्ञानेऽव्या(३)प्तेः। न द्वितीयः, शुक्तिरूप्यादिज्ञानेऽतिव्याप्तेस्तादवस्थ्यादित्याशङ्क्य संसारदशायाम-

---

(१) खपुस्तके पूर्वोक्तमबाधितत्वमिति पाठः, स चायुक्तः अबाधितविशेषणस्य पूर्वमनुक्तत्वात्।

(२) शुक्तिरूप्यादेर्ज्ञाने इति पाठो गपुस्तके। अस्मिन् पाठे स्वगोचरेत्यादिशुक्तिरूप्यादेर्विशेषणम्। तथा च तत्र 'पूर्वोक्तलक्षणस्य' इति शेषः पूरणीयः। पूर्वोक्तलक्षणस्य अतिव्याप्तिरित्यर्थः।

(३) वेदान्तमते घटादीनामपि बाधितत्वात्।

संसारकालीनबाधविषयप्रातिभासिकरजतादिविषयकत्वेनोक्त-लक्षणाभावान्नातिव्याप्तिः ॥

ननु (१)विसंवादिप्रवृत्त्या भ्रान्तिज्ञानसिद्धावपि तस्य प्रातिभासिकतत्कालोत्पन्नरजतादिविषयत्वे न प्रमाणम्, देशान्तरीयरजतस्य क्लृप्तस्यैव तद्विषयत्वसंभवादिति चेत् न। तस्यासन्निकृष्टतया प्रत्यक्षविषयत्वायोगात्। न च ज्ञानं

बाधितत्वं विवक्षितमित्याह-**शुक्तीति। भ्रमस्य**-भ्रान्तिज्ञानस्य। प्रातिभासिकत्वं प्रतीतिकालमात्रवृत्तित्व(२)मनिर्वचनीयत्वमिति यावत्। तथा च तदानीमनिर्वचनीयं रजताद्युत्पद्यते तस्य शुक्तिज्ञानबाध्यत्वात् तज्ज्ञानस्य बाधितविषयकत्वमिति भावः।

इदमसहमानोऽन्यथाख्यातिवादी शङ्कते-**नन्विति**। यद्यपि विसंवादिप्रवृत्त्या भ्रान्तिज्ञानं सिध्यति, तस्य च विषयं विनाऽनुपपत्तिस्तद्विषयं साधयति, तथाऽपि स विषयः प्रातिभासिकस्तत्कालोत्पन्न इत्यत्र नास्ति प्रमाणमित्याह-**विसंवादीति**। यद्विषयकप्रवृत्तिस्तस्य लाभे तस्याः संवादित्वमलाभे तु विसंवादित्वं, तच्च भ्रान्तिजन्यप्रवृत्तेरित्यर्थः। ननु विषयान्तरानुपपत्तिस्तत्र प्रमाणमित्याशङ्क्याह-**देशान्तरीयेति**। असन्निकृष्टदेशान्तरीयं वस्तु न प्रत्यक्षविषयत्वयोग्यमिति दूषयति-**नेति**। असन्निकृष्टस्य भ्रमे भानं नोपपद्यते प्रत्यक्षसामग्र्याः सन्निकर्षघटितत्वेन तद्रहितस्य प्रत्यक्षविषयत्वायोगादिति भावः। नन्वस्तु अलौकिकः सन्निकर्ष इत्याशङ्क्य स च किं सामान्यात्मकः

(१) विफला प्रवृत्तिर्विसंवादिनी यथा तोयबुध्या मरीचिषु प्रवृत्तस्य पिपासोः। सफला प्रवृत्तिः संवादिनी यथा गाङ्गे जले पिपासोरिति।

(२) अनिर्वचनीयत्वमिति गपुस्तके नास्ति।

तत्र प्रत्यासत्तिः, ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तावनुमानाद्युच्छेदापत्तेः ॥

किं वा ज्ञानरूप इति विकल्प्य नाद्यः । तत्र प्रमाणाभा(१)वात् । सन्निकृष्टधूमादिकमेव प्रत्यक्षविषयीभूतं न तु तन्मात्रं येन सामान्यं प्रत्यासत्तिरिति कल्पना स्यादिति प्रथमपक्षपरिहारं मनसि निधाय द्वितीयं पक्षं परिहरति–**न चेति** । **तत्र**–भ्रान्तिप्रत्यक्षविषये । ज्ञेयेन रजतादिना ज्ञानमेव सन्निकर्ष इति, न च प्रमाणाभावादिति भावः । विपक्षे बाधकं हेतुमाह–**ज्ञानस्येति** । **तत एव**–ज्ञानलक्षणप्रत्यासत्तेरेव ।

(१) तत्र प्रमाणाभावादिति । अयमाशयः—महानसे वह्निधूमयोर्व्याप्तिग्रहसमये धूमत्वेन वह्नित्वेन च सकलधूमवह्निव्यक्तीनामुपस्थितिर्जायते, सत्याञ्चोपस्थितौ सकलधूमवह्निव्यक्तीनां व्याप्यव्यापकभावो गृह्यते नो चेन्महानसीयधूमवह्निव्याप्त्या पर्वते धूमदर्शनानन्तरमनुमितिर्न स्यात्, अतो व्याप्तिग्रहसमये सकलव्यक्त्युपस्थितये सामान्यलक्षणा स्वीकार्येति तार्किकाः । अत्र वदामः–धूमत्वेन वह्नित्वेन च सकलधूमवह्न्युपस्थितिश्चेत् सामान्यलक्षणया स्यात् सर्वेषां सर्वज्ञत्वमयत्नलब्धम् । तथा हि, सामान्यलक्षणा नाम प्रत्यासत्तिः सन्निकर्षविशेषः, स चेदसन्निहितविषयेऽपि भवति अथ च भूतभाविवर्त्तमानयावद्व्यक्त्या आत्मानं संयुनक्ति किमवशिष्टमसार्वज्ञप्रयोजकमिति । तथा चेश्वरोऽसीति दृष्टविरुद्धमपि कल्पय। कस्ते निवारकः स्यात्। अस्माभिस्तु सन्निहितधूमादिसंयुक्तस्य चक्षुषः अतीतानागतासन्निहितवर्तमानविषयसमर्पणे सामर्थ्यन्नोपलब्धम् । दृष्टिविरुद्धं तत्कल्पयतस्ते साहसविजृम्भितमेतत्। कथं तर्हि वेदान्तनये महानसीयधूमवह्निव्याप्त्या पर्वते तदनुमानमिति। शृणु समाहितः सन् । व्याप्तिग्रहकाले महानसे महानसीयधूमवह्न्योः गोष्ठे गोष्ठीययोश्च तयोरेव व्याप्यव्यापकभावो गृह्यते, गृहीते चपृथक्पृथग् व्याप्यव्यापकभावे सामान्यतो धूमवह्निविषयं तमनुमिनोति । यथा धूमो वह्निव्याप्यः महानसादिषु तथोपलम्भात् पृथिवीव्याप्यगन्धवत् इति। ननु महानसादिवृत्तिप्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात् देशान्तरीयकालान्तरीयस्यानुपस्थितत्वाच्च धूमो वह्निव्याप्यो न वेति संशयो न स्यात्, सामान्यलक्षणया च सकलव्यक्त्युपस्थितौ देशान्तरीयादिषु वह्निनिरूपितव्याप्तिसन्देहो भविष्यतीति

नन्तु रजतोत्पादकानां रजतावयवानामभावे शुक्तौ क.थं तत्रापि रजतमुत्पद्यते इति चेत् । उच्यते । न हि लोक सिद्धसामग्री प्रातिभासिकरजतोत्पादिका, किन्तु विलक्ष णैव । तथा हि काचकामलादिदोषदूषितलोचनस्य पुरो वर्तिद्रव्यसंयोगादिदमाकारा चार्कचिक्याकारा काचिद न्तःकरणवृत्तिरुदेति तस्यां च वृत्ताविदमवच्छिन्नं चैतन्य प्रतिबिम्बते । तत्र पूर्वोक्तरीत्या वृत्तेर्निर्गमनेनेदमवच्छिन्न चैतन्यं वृत्त्यवच्छिन्नं चैतन्यं प्रमातृचैतन्यं चाभिन्नं भव

अलौकिकाऽपि प्रत्यक्षसामग्री अनुमितिसामग्रीतो बलवती, लाघवा दिति भावः ।

नन्वेवं तर्हि अपूर्वरजतोत्पत्तिपक्षोऽप्यसङ्गतो रजतोपादानलौकि कतदवयवाभावात् । अलौकिकानां तेषां तदुपादानत्वे प्रमाणाभावादि शङ्कते—**नन्विति** । अन्यथा उपपत्त्यभावात्पारिशेष्याद्रजतोत्पत्त्य ङ्गीकारस्यावश्यकत्वात्तदनुकूला तत्सामग्री कल्पनीयेति समाधानं प्रति जानीते—**उच्यते इति** । लौकिकोपादानाभावात् रजतोत्पत्तिर्न सम्भ वतीति न साम्प्रतम्, उपादानोपादेययोः सादृश्यावश्यम्भावादलौकिक रजतोत्पादने न लौकिकसामग्र्यपेक्षेत्याह—**न हीति** । तद्व्यतिरि क्तसामग्र्यभावात्पृच्छति—**किन्त्विति** । यथा प्रातिभासिकं रज लौकिकरजतविलक्षणं तथा तदुत्पादिका सामग्र्यपि लोकप्रसिद्धसामग्रीतो विलक्षणैवेत्युत्तरमाह—**विलक्षणेति** । तर्हि तत्स्वरूपं वक्तव्यमित्यपे क्षायां प्रतिज्ञातमर्थमुपपादयति-**तथा हीति** । **तत्र**—चैतन्ये प्रतिबि

चेन्न ।समानप्रकारनिश्चयस्यैव संशयविरोधित्वात् । धूमो वह्निव्याप्यो न वेत्या कारकसंशयस्य वह्निव्याप्यो धूम इति निश्चय एव विरोधी । अत्र सामान्यलक्ष णाऽस्वीकारेण महानसादौ तत्तद्धूमत्वेन सामानाधिकरण्यनिश्चये सत्यपि सामान्यतो धूमत्वेन निश्चयाभावान्न संशयानुपपत्तिरिति संक्षेपः ।

ति । ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा (१)शुक्तित्व-प्रकारिकाऽविद्या चाकचिक्यादिसादृश्यसन्दर्शनसमुद्बोधित-रजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च (२)परिणमते ॥

---

म्बिते सति । **पूर्वोक्तरीत्या**—तडागोदकमित्याद्युक्तरीत्या । **ततश्च**—त्रिविधचैतन्याभेदसम्पत्त्यनन्तरञ्च । **अविद्या**—रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च **परिणमत** इत्यन्वयः । ननु अविद्याया एवाकाशादिप्रपञ्चोपादानत्वाभ्युपगमात्प्रतिज्ञाहानिरित्याशङ्कानिरासाय प्रमातृचैतन्येत्यादिविशेषणद्वयम् । ननु यथोक्ताविद्या सर्वदा यथोक्ताकारेण कुतो **न** परिणमत इति चेत्, निमित्तकारणविरहादित्यभिप्रेत्य निमित्तकारणमाह-**रजतसंस्कारेति** । यद्यपि संस्कारोऽपि सर्वदा वर्त्तते, तथाऽप्युद्बोधितस्य निमित्ततेत्यभिप्रेत्योक्तम्-**चाकचिक्यादीति** । चाकचिक्यादेः सादृशस्य सन्दर्शनेन समुद्बोधितो रजतसंस्कारस्तल्लक्षणया सामग्र्या सहकृता । ननु चाकचिक्यादिसादृश्यसन्दर्शने नीलपृष्ठत्रिकोणताऽदर्शने च किं निमित्तमित्यपेक्षायामाह-**काचादीति** ।

---

(१) वियदाद्युपादानाविद्यातो वैलक्षण्यं द्योतयितुं विषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकेति विशेषणद्वयम् । वियदाद्युपादानमूलाविद्या तु चिन्मात्राश्रिता चिन्मात्रविषया निर्विकल्पकज्ञाननिवर्त्या च, इयन्तु तूलाविद्या शुक्त्यवच्छिन्नचैतन्याश्रितरजतभिन्ना या शुक्तिस्तन्निष्ठं यच्छुक्तित्वं तत्प्रकारिका सविकल्पकज्ञाननिवर्त्या चेति वैलक्षण्यम् ।

(२) अविद्या प्रातिभासिकरजताकारेण—तज्ज्ञानाकारेण-रजताकारवृत्तिरूपेण च परिणमते इत्यर्थः । वृत्तेरेव ज्ञानशब्दवाच्यत्वादिति भावः । अविद्यायाः वृत्त्याकारपरिणामप्रयोजकस्तु, इन्द्रियाणामनिर्वचनीयरजतेन सन्निकर्षाभावात् करणासहकृतेन साक्षिणा तत्प्रकाशकत्वायोगात् तज्ज्ञानासम्भवो यतः अतः साक्षिणा प्रातिभासिकस्य भासनाय-साक्षिसम्बन्ध एवेति बोध्यम् ।

(१) परिणामो नाम उपादानसमसत्ताककार्यापत्तिः। विवर्तो नाम उपादानविषमसत्ताककार्यापत्तिः। प्रातिभासिकरजतं चाविद्यापेक्षया परिणामः चैतन्यापेक्षया विवर्तं

---

नेत्रनिष्ठकाचादिदोषसंयुक्ता परिणमत इत्युक्तम्, तत्र किंलक्षणः परिणाम इत्यपेक्षायां तल्लक्षणमाह–**परिणाम इति**। यदभिन्नं कार्यमुत्पद्यते तदुपादानकारणम्। तेन समा सत्ता यस्य कार्यस्य तथा, भूतकार्यस्यापत्तिः यथोक्तकार्याकारेणोद्भवः, यथा व्यावहारिकसत्ताकदुग्धे तत्समसत्ताकदधिरूपकार्यापत्तिरित्यर्थः। विवर्तेऽतिव्याप्तिवारणाय **समसत्ताकेति**। समसत्ताकपदव्यावर्त्यत्वाद् वक्ष्यमाणोपयुक्तत्वाच्च। विवर्तं लक्षयति–**विवर्तो नामेति**। उपादानाद्विषमा सत्ता यस्य कार्यस्य तदापत्तिः। परिणामेऽतिव्याप्तिनिरासाय **विषमसत्ता**केत्युक्तम्। प्रातिभासिकरजतादेः परिणामत्वं विवर्तत्वं चास्तीत्याह–**प्रातिभासिकेति**। नन्वविद्यापरिणामस्य रजतस्याविद्यायां तादात्म्यसम्बन्धेन वर्तमानस्य चैतन्ये तत्सम्बन्धेनावर्तमानत्वाच्चैतन्योपादानकत्वासम्भवात् कथमुक्तविवर्तता (२)रजतस्य? इत्याशङ्क्य अविद्यापरिणामस्य तदधिष्ठानाश्रितत्वनियमान्नोक्तदोष इत्याह–**अविद्येति**।

---

(१) यादृशी सत्ता उपादानस्य तादृक्सत्ताककार्यापत्तिः परिणाम इत्यर्थः। यथा व्यावहारिकसत्ताकानां तन्तूनां व्यावहारिकसत्ताकपटभावापत्तिः सा परिणामपदवाच्या। पारमार्थिकसत्ताकस्य ब्रह्मण उपादानरूपस्य सत्तायाः विषमा—व्यावहारिकी वियदादेः, प्रातिभासिकी शुक्तिरजतादेः–सत्ता येषान्तानि उपादानविषमसत्ताकानि, तानि च कार्याणि चेति तेषामापत्तिस्तथा। तथा च ब्रह्मणो वियदादिप्रपञ्चस्य विवर्तोपादानत्वं निमित्तत्वञ्चेति 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' ब्र० सू० १-४-२३ इति न्यायात्। परिणाम्युपादानन्तु मायैव, सा च क्वचित्तुला क्वचिन्मूलेत्यन्यदेतत्।

(२) कथमुक्ता चैतन्यविवर्तता रजतस्य इति पाठेन भाव्यम्। अथवा अस्यैव समासवृत्त्या उक्तस्य–चैतन्यस्य विवर्तता उक्तविवर्तता सा कथमित्येकोऽर्थः कार्यः।

इति चोच्यते। (१) अविद्यापरिणामरूपं च तद्रजतमविद्याधिष्ठाने इदमवच्छिन्नचैतन्ये वर्तते। अस्मन्मते सर्वस्यापि कार्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात्॥

(२)ननु चैतन्यनिष्ठस्य रजतस्य कथमिदं रजतमिति पुरोवर्तितादात्म्यम्? उच्यते। यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेनोपालम्भः शरीरस्य सुखाद्यधिकरणतावच्छेदकत्वात्, तथा चैतन्यमात्रस्य रजतं प्रत्यधिष्ठानतया इदमवच्छिन्नचैतन्यस्य तदधिष्ठानत्वेन इदमोऽवच्छेदकतया रजतस्य पुरोवर्तिसंसर्गप्रत्यय उपपद्यते।

---

नन्वेवं तर्हि पुरोवर्तितादात्म्यप्रत्ययानुपपत्तिरिति शङ्कते—**नन्विति**। अविद्यापरिणामस्याविद्याधिष्ठानाश्रितत्ववच्चैतन्याध्यस्तस्य रजतादेः तदवच्छेदकपुरोवर्तितादात्म्यप्रत्ययोपपत्तिरित्याशयेन समाधत्ते—**उच्यत इति**। ब्राह्मणोऽहं सुखी मम देहः सुखीत्येवं शरीरनिष्ठत्वेन देहस्यात्मनि सुखाद्युपलब्ध्यवच्छेदकत्ववदिदमश्चैतन्ये रजताध्यासस्यावच्छेदकत्वादुक्तप्रत्यय उपपद्यत इत्याह—**तथा चैतन्येति**।

नन्विदमवच्छिन्नचैतन्याध्यस्तरजतादेः साक्षिण्यनध्यस्ततया तस्य केवलसाक्षिवेद्यता। सुखादेरिवानन्यवेद्यता च (३)साम्प्रदायिकैरुच्य-

---

(१) यथा तन्तुपरिणामस्य पटस्य तन्तुदेशत्वम्, तथा अविद्यापरिणामस्य शुक्तिरूप्यस्यापि अविद्यादेशत्वम्। अविद्या च चैतन्यनिष्ठा, तथा च शुक्तिरूप्यस्यापि चैतन्यनिष्ठत्वमुचितमिति भावः।

(२) ननु अग्रे भूतलस्थतन्तुषु विद्यमानस्य पटस्य प्रत्यक्षकाले इहेदानीं पट इत्याकारो यथा तथा चैतन्यनिष्ठाविद्यायां वर्तमानस्य शुक्तिरूप्यस्य चैतन्ये रजतम् इति प्रत्ययो भविष्यति, भवति तु इह रजतमित्याशङ्कते—नन्विति। सर्वव्यापिनः चैतन्यस्य इहेति प्रादेशिकत्वन्न युक्तमित्याशयः।

(३) पञ्चपादिकाचार्यैः।

तस्य च विषयचैतन्यस्य तदन्तःकरणोपहितचैतन्याभिन्नतया विषयचैतन्याध्यस्तमपि रजतं साक्षिण्यध्यस्तं केवलसाक्षिवेद्यं सुखादिवदनन्यवेद्यमिति चोच्यते।

ननु साक्षिण्यध्यस्तत्वेऽहं रजतमिति प्रत्ययः स्यात्, अहं सुखीतिवदिति चेत्। उच्यते। न हि सुखादीनामन्तःकरणावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वप्रयुक्तम् अहं सुखीति ज्ञानम्। सुखादीनां घटादिवच्छुद्धचैतन्य एवाध्यासात्, किन्तु यस्य यदाकारानुभवाहितसंस्कारसहकृताविद्याकार्यत्वं तस्य तदाकारानुभवविषयत्वमित्येवानुगतं नियामकम्।

तथा च इदमाकारानुभवाहितसंस्कारसहकृताविद्याकार्य-

---

माना कथमुपपद्यत इत्याशङ्क्याह—**तस्य चेति**।

ननु सुखादीनामवच्छेदकशरीरनिष्ठत्वेनोपलम्भो न सर्वदा, अहं सुखीत्यात्मनिष्ठत्वेनाप्युपलम्भदर्शनात्। तथा रजतादेरप्यन्तः साक्षिण्यध्यस्तत्वाभ्युपगमादहं मनुष्य इतिवदहं रजतम्, अहं सुखीतिवदहं रजतवान् इत्येवं वा प्रत्ययः कदापि कुतो न भवति इत्याशङ्कते—**नन्विति**। न हि यत्र (१)यदध्यासस्तस्य तन्निष्ठाविद्याकार्यत्वप्रयुक्तं तन्निष्ठतयैव भानमिति नियमः सम्भवति, सुखादेर्घटादिवत् शुद्धचैतन्यध्यस्तत्वेऽप्यहं सुखीति प्रत्ययदर्शनाद् इत्याशयेन समाधत्ते—**उच्यत इति**। तर्हि घटादेः सुखादेः शुक्तिरूप्यादेश्च तत्तत्प्रतीतिविषयत्वे पृथक्पृथक् नियामकमुतैकमिति पृच्छति—**किन्त्विति**। नाना नियामकाभ्युपगमे गौरवादनुगतैकनियामकस्वीकार उचित इत्युत्तरमाह **यस्येति**।

उक्तनियामकं सर्वत्र योजयति—**तथा चेति**। निरुक्तानुगतनि-

---

(१) यदज्ञानाध्यास इति पाठो गपुस्तके।

त्वात् घटादेरिदमाकारानुभवविषयत्वम् । अहमाकारानुभवाहितसंस्कारसहिताविद्याकार्यत्वादन्तःकरणादेरहमाकारानुभवविषयत्वम् । शरीरेन्द्रियादेरुभयविधानुभवसंस्कारसहिताविद्याकार्यत्वादुभयविधानुभवविषयत्वम् । तथा चोभयविधोऽनुभवः इदं शरीरमहं देहोऽहं मनुष्योऽहं ब्राह्मण इदं चक्षुरहं काण इदं श्रोत्रमहं बधिर इति ॥

प्रकृते च प्रातिभासिकरजतस्य प्रमातृचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वेऽपि इदं रजतमिति सत्यस्थलीयेदमंशाकारानुभवाहितसंस्कारजन्यत्वादिदमाकारानुभवविषयता, न त्वहं रजतमित्यहमाकारानुभवविषयतेत्यनुसन्धेयम् ॥

---

यामके सति अयं घटः, अहम्, इतीदमाकारानुभवस्याहमाकारानुभवस्य च स्पष्टत्वमभिप्रेत्योभयविधाकारानुभवमावेदयति–**तथा चेति** । यस्योभयविधानुभवस्य विषयत्वं देहेन्द्रियादेः स चोभयविधोऽभव एवमित्यर्थः ।

निरुक्तनियामकं प्रकृते योजयति–**प्रकृते चेति** । यद्यपि शुक्तिरूप्यादेः प्रमातृचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वमस्ति तथाऽपि तत्सहकारिकारणम् इदं रजतमित्यादिसत्यरजतस्थलीयेदमाकारानुभवाहितसंस्कारः (१), अतः तस्येदमाकारानुभवविषयत्वं न त्वहमनुभवविषयत्वमिति भावः ।

नन्वस्तु शुक्तिरूप्यस्येदमाकारानुभवविषयत्वं तथाऽपि न तद्विषयाऽविद्यावृत्तिराश्रयणीया, (२) तस्य साक्षादनावृत्तसाक्षिसम्बन्धि-

---

(१) संस्कारः तत्सहकारिकारणमित्यन्वयः ।

(२) शुक्तिरूप्यस्य ।

**नन्वेवमपि मिथ्यारजतस्य साक्षात्साक्षिसम्बन्धितया भानसंभवे रजतगोचरज्ञानाभासरूपाया अविद्यावृत्तेरभ्युपगमः किमर्थः? इति चेत्। (१)न। स्वगोचरवृत्त्युपहितचैतन्यभिन्नसत्ताकत्वाभावस्य विषयापरोक्षरूपतया रजतस्यापरोक्षत्वसिद्धये तदभ्युपगमात्॥**

तयाऽपरोक्षभानसम्भवादिति स्वयूथ्यः (२)शङ्कते-**नन्वेवमपीति।** यद्यपि साक्ष्यध्यस्तरजतस्य साक्षिचैतन्याभिन्नसत्ताकत्वमस्ति, तथाऽपि न तस्यापरोक्षत्वं सम्भवति साक्षिचैतन्यस्य रजतगोचरवृत्त्युपहितत्वाभावात् तस्मात्तदपरोक्षतार्थमविद्यावृत्तेरावश्यकतेति समाधत्ते-**नेति । चैतन्यभिन्नसत्ताकत्वाभावस्य**—चैतन्याभिन्नसत्ताकत्वस्य।

नन्वेवमेकं सन्धातुं प्रवृत्तस्यापरं हीयत इति न्यायापातः, रजतापरोक्षतासिद्धयेऽविद्यावृत्त्यभ्युपगमे प्राभाकरमतवद्विशिष्टज्ञानानभ्युपगमप्रसङ्गेन रजतज्ञानस्य भ्रमत्वहानात्। प्राभाकरमते हि इदं रजतमित्यत्र ज्ञानद्वयमङ्गीकृतम्। तत्रेदमिति पुरोवर्तिविषयमनुभवात्मकं ज्ञानं रजतमित्यसन्निकृष्टरजतविषयं स्मरणात्मकम्, अतो वस्तुद्वयतादात्म्यावगाहिविशिष्टज्ञानं क्वापि नास्तीति सर्वमपि ज्ञानं यथार्थमेवेति भ्रमज्ञानासिद्धिः, तद्वद्भवन्मतेऽपि (३)वृत्तितद्विषयभेदाभ्युपगमे वस्तु-

(१) गपुस्तके न इति पदं नास्ति। टीकाऽनुरोधादपि रक्ष्यमेव।

(२) कखपुस्तकयोः स्वयूथी इति पाठः, गपुस्तके स्वयूथ्यमिति पाठश्च। स्वयूथ्यः सिद्धान्त्येकदेशीत्यर्थः।

(३) तस्या वृत्तेर्विषयः तद्विषयः वृत्तिश्च तद्विषयश्च वृत्तितद्विषयौ तयोर्भेदाभ्युपगमः तस्मिन्। वृत्तिभेदो यथा एका इदमाकारा अपरा रजतज्ञानाकारा। विषयभेदो यथा आद्यायाः पुरोवर्ति वस्तु विषयः अन्त्याया अविद्यापरिणामरूपं प्रातिभासिकं रजतमिति।

(१)नन्विदंवृत्ते रजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे गुरुमतवद् विशिष्टज्ञानानभ्युपगमे कुतो भ्रमज्ञानसिद्धिरिति चेत् । न(२) । वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेन (३)भ्रमत्वस्य स्वीकारात् । अत एव साक्षिज्ञानस्य सत्यासत्यविषयतया प्रामाण्यानियमाद् अप्रामाण्योक्तिः साम्प्रदायिकानाम् ॥

---

द्वयतादात्म्यावगाह्येकज्ञानानभ्युपगमाद् भ्रमज्ञानं न सिध्यतीति स एव शङ्कते—**नन्विदमिति** । वृत्तिभेदेऽपि नास्ति ज्ञानभेदस्तयोरेकदेशस्थत्वेन तत्प्रतिबिम्बितचैतन्यस्यैकत्वान्मैवमित्याह—**नेति** । यत एकस्यैव साक्षिज्ञानस्य सत्यासत्यवस्तुविषयत्वमत एव तस्याप्रामाण्योक्तिः साम्प्रदायिकानां सङ्गता इत्याह—**अत एवेति** ।

---

( १ ) इदमाकारा पुरोवर्तिविषयाऽन्तःकरणवृत्तिरेका प्रातिभासिकरजतविषयाऽविद्यावृत्तिरपरा । तथा च यथा व्यस्ताश्रयेषु पत्र–शुष्कपत्र–भ्रमर–जपाकुसुमेषु गृह्यमाणैर्हरित–पीत–नील–रक्तवर्णैर्न जात्वपि भ्रमरे चित्ररूपी भ्रमर इति विशिष्टबुद्धिः, तथैव इदं रजतमिति विशिष्टबुद्धिर्भिन्नविषयाभ्यां वृत्तिभ्यान्नैव भविष्यतीत्याक्षेप्तुरभिप्रायः ।

( २ ) न इति पदं गपुस्तके नास्ति । टीकायाञ्चास्त्येव ।

( ३ ) ननु इदं रजतमित्यत्र वृत्तिद्वयं स्वीकृतं पूर्वग्रन्थे तत्रेदमाकाराऽन्तःकरणवृत्तिरेका तया च पुरोवर्ति वस्तु गृह्यते, इदमवच्छिन्नचैतन्यनिष्ठशुक्तित्वाविद्यायाः परिणामरूपा वृत्तिर्द्वितीया तया च रजतं गृह्यत इति वृत्तिद्वयेन विषयद्वये गृहीते ज्ञानद्वयमेवेदं तथा च रजतमिदमित्येकं ज्ञानं भ्रमात्मकमिति सिद्धान्तो भज्येत प्राभाकरमतप्रवेशश्च स्यादिति चेन्न । भिन्नविषयकवृत्त्योर्भेदेऽपि तयोः प्रतिबिम्बितस्य चैतन्यस्यैक्यात् । प्रत्यक्षस्थले सर्वत्र वृत्ति–प्रमातृ–विषयावच्छिन्नचैतन्यानां पूर्वोक्तप्रणाड्या ऐक्यावश्यम्भावात् तस्य च प्रत्यक्षज्ञानस्य व्यावहारिकसत्येन पुरोवर्तिवस्तुना प्रातिभासिकेन रजतवस्तुना च तादात्म्यावगाहितया विशिष्टज्ञानत्वं भ्रमत्वं च सिद्धमिति ।

ननु सिद्धान्ते देशान्तरीयरजतमप्यविद्याकार्यमध्यस्तं चेति कथं शुक्तिरूप्यस्य ततो वैलक्षण्यमिति चेत् । न । त्वन्मते सत्यत्वाविशेषेऽपि केषाञ्चित्क्षणिकत्वं केषाञ्चित्स्थायित्वमित्यत्र यदेवं नियामकं तदेव स्वभावविशेषादिकं ममापि । यद्वा घटाद्यध्यासे अविद्यैव दोषत्वेनापि हेतुः, शुक्तिरूप्याद्यध्यासे तु काचादयो दोषा अपि । तथा चागन्तुकदोषजन्यत्वं प्रातिभासिकत्वे प्रयोजकम् । अत एव स्वप्नोपलब्धरथादीनामागन्तुकनिद्रादिदोषजन्यत्वात्प्रातिभासिकत्वम् ॥

ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैव व्यव-

---

नन्वेवं महता प्रयासेन शुक्तिरूप्यस्याविद्याकार्यत्वाध्यस्तत्वसाधनं देशान्तरीयरजताद्वैलक्षण्यसिध्यर्थम्(१)तच्च न संभवति, भवत्सिद्धान्ते देशान्तरीयरजतादेरपि तथात्वाभ्युपगमात्(२)। तथा चोपलभ्यमानवैलक्षण्ये को हेतुरिति नैयायिकः शङ्कते—**ननु सिद्धान्त** इति । त्वन्मते सत्यत्वाविशेषेऽपि शब्दज्ञानेच्छादीनां क्षणिकत्वं घटादीनां स्थायित्वमिति वैलक्षण्ये यन्नियामकं तदेव ममाप्यस्त्विति परिहरति—**नेति** । कालान्तरोपलम्भानुपलम्भादिकमादिपदेन गृह्यते । तथा च पक्षद्वयेऽपि दोषपरिहारयोः समत्वादेकस्य नियोगोऽनुपपन्न(३)इति भावः । मम त्वन्यदपि वैलक्षण्यं नियामकमित्याशयेनाह—**यद्वेति** । **अत एव**—आगन्तुकदोषजन्यत्वस्य प्रातिभासिकत्वप्रयोजकत्वादेव ।

ननु स्वप्नोपलब्धरथादीनां प्रातिभासिकत्वाभ्युपगमे तेषां तात्कालिकोत्पत्तिरायाता सा चानुपपन्ना स्मरणमात्रेण लब्धव्यवहारोपपत्त्या सृष्टिकल्पनानौचित्यादित्यख्यातिवादी शङ्कते—**ननु स्वप्नेति** । प्रती·

---

(१) कृतमिति शेषः । (२) अविद्याकार्यत्वाध्यस्तत्वाभ्युपगमादित्यर्थः । (३) 'यश्चोभयोः समो दोषः परिहारस्तयोः समः' इति न्यायात् ।

द्वारोपपत्तौ न रथादिसृष्टिकल्पनं गौरवादिति चेत् । न । रथादेः स्मरणमात्राभ्युपगमे रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः, 'अथ रथान् रथयोगान् पथः सृजते' बृ० ४ । ३ । १० इति रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च । तस्माच्छुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोऽपि प्रातिभासिकाः यावत्प्रतिभासमवतिष्ठन्ते ॥

---

तिविरोधान्नैवमित्याह-**नेति** । स्वप्ने रथादेः स्मरणमात्रमस्तीत्ययुक्तं, रथं पश्यामि गीतं शृणोमीत्याद्यनुभवविरोधात् । ननु दोषवशात् स्मरामीत्यस्य (१) प्रमोषात्पश्यामीत्याद्याकारा प्रतीतिरित्याशङ्क्याह-**स्वप्न इति** । दोषनिवृत्तिकालेऽपि स्वप्ने रथमद्राक्षमित्येव प्रतीतिर्न तु स्मृतवानिति प्रतीतिरत उक्तप्रत्ययव्यवहारस्य न स्मृतिमात्रादुपपत्तिरिति भावः । अत्रानुभवपदं प्रतीतिपरम् । ननु जाग्रत्कालीनप्रतीतिरपि न विरुद्ध्यते, स्वप्ने स्मृतेरनुभवाकारतयोत्पन्नत्वेन तथैव परामर्शौचित्यात्, तस्माद्गौरवग्रस्तरथादिसृष्टिर्न कल्पनीयेत्याशङ्क्याह-**अथेति** । जाग्रद्भोगप्रदकर्मोपरमे स्वाप्नभोगप्रदकर्माभिव्यक्त्यनन्तरम् । **रथान्**-रथयोगान् तदुपकरणभूतानश्वादीन्, तद्योग्यमार्गांश्च सृजत इति तत्सृष्टिप्रतिपादकश्रुत्या गौरवस्य प्रामाणिकतया उक्तप्रतीतेरन्यथानयनमयुक्तमिति भावः । उक्तश्रुतिविरोधादन्यथाख्यातिरप्ययुक्तेति मनसि निधायोपसंहरति-**तस्मादिति** । प्रातिभासिकपदविवरणं यावत्प्रतिभासमवतिष्ठन्त इति-प्रतिभासनियतसत्ताका-इति यावत् ।

ननु शुक्तिरूप्यादेर्यथा पुरोवर्ति वस्त्वधिष्ठानं तथा स्वप्नस्थादेरप्यधिष्ठानं वक्तव्यम् । तत्किं चैतन्यम् ? उत देशविशेषः ? आद्येऽपि

---

(१) प्रमोषादिति । मुष् स्तेये इत्यस्य रूपम्, अभानादित्यर्थः ।

**ननु स्वप्नरथाद्यधिष्ठानतयोपलभ्यमानदेशविशेषस्यापि तदाऽसन्निकृष्टतयाऽनिर्वचनीयप्रातिभासिकदेशोऽभ्युपगन्तव्यः, तथा च रथाद्यध्यासः (१) कुत्रेति चेत्। न। चैतन्यस्य स्वयंप्रकाशस्य रथाद्यधिष्ठानत्वात्प्रतीयमानं रथाद्यस्तीत्येव**

---

तत्किं शुद्धमुतान्तःकरणावच्छिन्नम्? नोभयमपि, तयोरधिष्ठानत्वेनाप्रतीतेः। द्वितीयेऽपि स किं बाह्य उत स्वाप्निकः,?। नाद्यः, तस्यासन्निकृष्टतया प्रत्यक्षज्ञानविषयत्वायोगात्। न द्वितीयः, (२) अधिष्ठानतयोपलभ्यमानस्यापि तस्य सन्निकृष्टतया प्रातिभासिकत्वावश्यम्भावेनाधिष्ठानसापेक्षतया तत्त्वायोगादित्याशयेन शङ्कते—**ननु स्वप्नेति**। तदा स्वप्नावस्थायां रथाद्यधिष्ठनतयोपलभ्यमानदेशविशेषस्यापि सन्निकृष्टतयाऽनिर्वचनीयप्रातिभासिकदेशोऽभ्युपगन्तव्य इत्यन्वयः। प्रथमपक्षमवलम्ब्य परिहरति—**नेति**। ननु चैतन्यस्य पुरोवर्तिवद्वृत्त्यवच्छिन्नज्ञानविषयत्वाभावात् कथमधिष्ठानता इत्याशङ्क्याह—**स्वयंप्रकाशेति**। स्वप्रकाशपरप्रकाश्यसाधारणं ज्ञायमानत्वमेवाधिष्ठानत्वप्रयोजकं लाघवादिति भावः। ननु स्वयं प्रकाशस्यापि तस्य न तदा चिद्रूपेण भानं (३) रथादिजडाद्यधिष्ठानत्वनिर्वाहकं प्रतिकूलरूपत्वात्। नाप्यानन्दरूपेण, तस्य मूलाज्ञाननिवृत्तिमन्तरा भानासम्भवादित्याशङ्क्याह—**प्रतीयमानेति**। अत्रायं रथ इत्यधिष्ठानतया प्रतीय-

---

(१) कुत्रेति। निरधिष्ठानभ्रमायोगाद् अधिष्ठानत्वेन प्रतीयमानस्य देशविशेषस्यापि प्रातिभासिकत्वेन रथभ्रमात् पूर्वमभावाद् रथाद्यधिष्ठानाभावादेव रथाद्यध्यासाभाव इत्याक्षेप्तुरभिप्रायः।

(२) अधिष्ठानतयेति। स्वाप्नरथाद्यधिष्ठानतया उपलभ्यमानस्य तस्य स्वाप्नदेशस्य पुरोवर्तित्वेन प्रतीयमानस्य प्रातिभासिकस्य पुनः अधिष्ठानसापेक्षत्वनियमात्तस्याप्यधिष्ठानं किञ्चिद्वक्तव्यमापतत्यतोऽनवस्थैव भविष्यतीति भावः।

(३) चिद्रूपेण भानमिति कर्तृपदम्। चिद्रूपेण भानमधिष्ठानत्वनिर्वाहकं न

प्रतीयते इति सद्रूपेण प्रकाशमानं चैतन्यमेवाधिष्ठानम्। देशविशेषोऽपि चिदध्यस्तः प्रातिभासिकः। रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकम्, तदा सर्वेन्द्रियाणामुपरमात्। 'अहं गजः' इत्यादिप्रतीत्यापादनन्तु पूर्ववन्निरसनीयम्॥

स्वप्नगजादयः साक्षान्मायापरिणामा इति केचित्।

---

मानस्यापि देशविशेषस्य प्रातिभासिकत्वान्नाधिष्ठानतेत्याह–**देशविशेषोऽपीति**। किं च इन्द्रियग्राह्यत्वमपि तत्र कल्पितमित्याह–**रथादाविति**। तत्र हेतुमाह–**तदेति**। ननु स्वप्नगजाद्यधिष्ठानं यद्यपि चैतन्यं, तथाऽपि तस्यान्तःकरणावच्छिन्नत्वमस्त्येव 'सधीः स्वप्नो भूत्वेमं लोकमनुसंचरेत्' इत्यादिश्रुतेः। तथा चाहं गज इति प्रतीत्यापत्तिरित्याशङ्क्याह–**अहं गज इति। पूर्ववदिति**। यथा शुक्तिरजतादेरिदमाकारानुभवाहितसंस्कारसहकृताविद्याजन्यत्वादहं रजतमिति प्रतीत्यापादानयुक्तं तद्वदहं **गज** इति प्रतीत्यापादानमपीत्यर्थः।

ननु स्वप्नगजादेस्तत्कालोत्पन्नत्वमनुपपन्नं तेषामुपादानासम्भवात्। न तावच्चैतन्यं तदुपादानं तस्यापरिणामित्वात्। नापि मूलाविद्या, तस्यास्तत्तदवयवसापेक्षायाः साक्षात्तदुपादानत्वासम्भवात्। नापि तूलाविद्या(१), तस्या बाह्यदेशावच्छिन्नचैतन्याश्रितायास्तत्त्वादित्याशङ्क्याह—**स्वप्नगजादय इति। मायापरिणामा**–मूलाविद्योपादानकाः। न चैवं सुषुप्तौ तत्प्रतिभासापत्तिरिति वाच्यम्। रागद्वेषादि-

---

भवति आनन्दरूपेण भानमपि नाधिष्ठानत्वनिर्वाहकमित्यन्वयः।

(१) तूलाविद्या हि बाह्यदेशावच्छिन्नचैतन्याश्रिता स्वप्नाधिष्ठानम्? उत अन्तःकरणावच्छिन्नचैतन्याश्रिता? नाद्यः, बाह्यदेशस्यापि प्रातिभासिकत्वात्। नान्त्यः, अन्तःकरणस्य गजाद्युपादानाविद्याधिष्ठानत्वे प्रमाणाभावात्। इदं सर्वमभिप्रेत्योक्तं नापीत्यादिना तत्त्वादित्यन्तेन। तत्त्वादित्यस्य उपादानत्वादित्यर्थः।

अन्तःकरणद्वारा तत्परिणामा इत्यन्ये ।

ननु गजादेः शुद्धचैतन्याध्यस्तत्वे इदानीमधिष्ठानसाक्षात्काराभावेन जागरणेऽपि स्वप्नोपलब्धगजादयोऽनुवर्तेरन् । उच्यते । कार्यविनाशो हि द्विविधः-कश्चिदुपादानेन सह, कश्चिद्विद्यमान एवोपादाने । आद्यो बाधः । द्वितीयस्तु निवृत्तिः । आद्यस्य कारणमधिष्ठानतत्वसाक्षात्कारः, तेन विनोपादानभूताया अविद्याया अनिवृतेः । द्वितीये विरोधिवृत्त्युत्पत्तिर्दोषनिवृत्तिश्च । तदिह ब्रह्मसाक्षात्का-

Distinction of effects two fold

---

वन्निमित्तकारणस्यान्तःकरणस्य(१) तदानीमभावात् । अन्तःकरणस्य निमित्तकारणत्वकल्पनापेक्षया तद्द्वाराऽविद्यापरिणामित्वकल्पनं वरम् इत्यभिप्रायवतां पक्षमाह—**अन्तःकरणेति ।**

नन्वध्यस्तस्याधिष्ठानसाक्षात्कारनिवर्त्यत्वनियमात् तत्साक्षात्काराभावाज्जागरणे तेषामनुवृत्तिप्रसङ्गो दुर्वार इति शङ्कते–**ननु गजादेरिति ।** यद्यप्यधिष्ठानसाक्षात्कारं विनाऽध्यस्तस्य बाधो न सम्भवति. तथाऽपि तं विनाऽपि तन्निवृत्तिसम्भवाद् न तदनुवृत्तिप्रसङ्ग इति समाधानं प्रतिजानीते–**उच्यते इति ।** बाधरूपनाशाभावेऽपि निवृत्तिरूपनाशं प्रकृते दर्शयितुं नाशद्वैविध्यमाह–**कार्यविनाशो हीति । उपादानेन**–अज्ञानेन । **आद्यस्य**–बाधसंज्ञस्य उपादानेन सह नाशस्य । **तत्** तस्मान्नाशस्य द्वैविध्याद्धेतोः । **इह**–जागरणे । ब्रह्मसाक्षात्काराभावात् स्वप्नप्रपञ्चो माबाधि गजादिनिवृत्तौ को विरोध इत्यन्वयः । तत्र हेतुमाह–**विरोधीति ।** यथोपादानसत्वेऽपि मुसलप्रहारेण घटादिनिवृत्तिर्भवति तथा विरोधिवृत्त्यन्तरोदयेन गजादेरपि निवृत्तिरुपपद्यते, स्वप्न एव अश्वादिप्रत्यये गजादिनिवृत्तिदर्शनात् । विरोधिवृत्त्य-

---

(१) यथा शुक्तिरजतस्थले रागादयो निमित्तं, तथैव स्वाप्नगजादावन्तःकरणं निमित्तं सुषुप्तौ तदभावान्नानुवृत्तिः स्वाप्नगजादीनामिति ।

राभावात् स्वप्नप्रपञ्चो माबाधि(१)। मुसलप्रहारेण घटादेरिव विरोधिप्रत्ययान्तरोदयेन स्वप्नजनकीभूतनिद्रादिदोषनाशेन वा गजादिनिवृत्तौ को विरोधः॥

एवं च शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठतूलाविद्याकार्यत्वपक्षे(२) शुक्तिरिति ज्ञानेन तदज्ञानेन(३)सह-

---

न्तरनिवृत्तौ पुनरुत्पत्तिमाशङ्क्य हेत्वन्तरमाह-**स्वप्नजनकीभूतेति**। स्वप्नप्रतीतिजनकीभूतेत्यर्थः। आदिपदेनादृष्टादिसङ्ग्रहः।

ननु शुक्तिरूप्यस्य बाधो निवृत्तिर्वेत्यपेक्षायामाह-**एवं चेति**। कार्यनाशस्य द्वैविध्ये सिद्धे सति। **शुक्तिरिति ज्ञानेनेति**। नेदं रजतमिति ज्ञानं त्वनुवादः शुक्तित्वप्रकारकज्ञानस्य रजतादिभेदाज्ञाननिवर्तकत्वात्। तदुक्तं पञ्चपादिकायाम्-'शुक्तित्वज्ञानमेव बाधकं नेदं

---

(१) यद्यपि लब्धेषु सर्वपुस्तकेषु 'स्वप्नप्रपञ्चो मा बाधिष्ट' इत्येव पाठ उपलभ्यते, तथाऽपि माङुपपदस्य बधेः कर्मणि लुङि 'चिण्भावकर्मणोः' इत्यनेन माबाधि इति 'स्वप्नप्रपञ्चं माबाधिष्ट' इति वा प्रयोगेण भाव्यम्। जागरणवृत्त्येत्यध्याहारः। तथा च जागरणवृत्तिः स्वाप्नप्रपञ्चं माबाध्यताम्, परन्तु तं निवर्तयतीत्यभ्युपगमे को विरोधः? विरोधो नास्तीत्यर्थः। कर्मण एव कर्तृत्वविवक्षया यथाश्रुतपाठस्य उपपत्तिः कर्तुं शक्यते, तथाऽपि क्लिष्टकल्पनया अपेक्षितस्यार्थस्यानुपलब्धेश्च 'माबाधि' इति पाठः स्थापित इति। वेङ्कटेश्वरीयमुद्रितयोः पुस्तकयोः तट्टीकयोश्च मा बाधिष्ठ इति ठकारान्तः पाठः, स चातिस्थवीय इति विभावनीयं सुधीभिः॥

(२) प्रातिभासिकाः पदार्थाः तूलाविद्याकार्या इति पद्मपादाचार्याः। तन्मते शुक्तिरियमित्यादिज्ञानेन शुक्तित्वाज्ञानरूपया तूलाविद्यया प्रातिभासिकोपादानभूतया सह रजतादेर्बाधः। मूलाविद्याकार्या इति मिश्रादिमते मूलाविद्याया ब्रह्मज्ञानमात्रबाध्यायास्तस्याः शुक्तिरित्याकारकज्ञानेन बाधाभावेऽपि मुसलप्रहारेण विद्यमाने एवोपादाने मृदि घटनिवृत्तिवद् रजतस्य निवृत्तिरेवेति।

(३) शुक्तित्वाज्ञानेन तुलाविद्यारूपेण।

रजतस्य बाधः। मूलाविद्याकार्यत्वपक्षे तु मूलाविद्याया ब्रह्मतत्त्वसाक्षात्कारमात्रनिवर्त्यतया शुक्तित्वज्ञानेनानिवर्त्यतया रजतस्य तत्र शुक्तिज्ञानान्निवृत्तिमात्रं, मुसलप्रहारेण घटस्येव।

ननु शुक्तौ रजतस्य प्रतिभाससमये प्रातिभासिकसत्त्वाभ्युपगमे नेदं रजतमिति त्रैकालिकनिषेधज्ञानं न स्यात्, किन्त्विदानीम् इदं न रजतमिति (१), इदानीं घटः श्यामो नेतिवदिति चेत्। न। न हि तत्र रजतत्वावच्छिन्नप्रतियोगिताकाभावो निषेधधीविषयः, किन्तु(२) लौकिकपारमा-

रजतमित्यनुवाद' इति। **रजतस्य बाधः**—उपादानेन सह नाशः तूलाविद्याश्च मूलाज्ञानस्यैवावस्थाविशेषाः। तदुक्तं विवरणे—'मूलाज्ञानस्यैवावस्थाभेदा रजताद्युपादानानि शुक्तिकादिज्ञानैः सहाध्यासेन निवर्तन्ते' इति। मूलाविद्याकार्यत्वपक्षे तु स्वप्नगजादिवन्निवृत्तिरित्याह—**मूलाविद्येति**। नन्वस्मिन् पक्षे शुक्तिरूप्यज्ञाने प्रमात्वप्रसङ्गः, संसारदशायामबाधितत्वघटितस्य लक्षणस्य सत्वादिति चेन्न। अबाधितपदेनागन्तुकदोषाजन्यत्वस्य विवक्षितत्वात्।

ननु शुक्तिरजतस्याविद्याकार्यत्वात् प्रतिभाससमये सत्त्वस्वीकारे नेदं रजतमिति त्रैकालिकनिषेधानुपपत्तिरिति शङ्कते—**ननु शुक्ताविति**। विषयभेदादविरोध इति परिहरति—**नेति**। **हि**—यस्मात्, तत्र नेदं रजतमिति त्रैकालिकनिषेधज्ञाने **रजतत्वावच्छिन्नप्रतियोगिताकाभावो** निषेधज्ञानविषयो न भवति। तर्हि कीदृशोऽभावस्तद्विषय इति पृच्छति—**किन्त्विति**। व्यावहारिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताको-

(१) इति ज्ञानं स्यादिति शेषः।

(२) लौकिकपारमार्थिकपदेन सर्वत्र व्यावहारिकेत्यर्थो ज्ञेयः। नेदं रजतमित्यत्र इदं (प्रातिभासिकम्) लौकिकपारमार्थिकम् (व्यावहारिकम्) नास्तीति

र्थिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताकः, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमात् ।

ननु प्रातिभासिके रजते पारमार्थिकत्वमवगतम् ? न वा ? अनवगमे प्रतियोगितावच्छेदकावच्छिन्नरजतत्त्वज्ञानाभावादभावप्रत्यक्षानुपपत्तिः(१), अवगमेऽपरोक्षावभासस्य तत्कालीनविषयसत्तानियतत्वाद् रजते पारमार्थिकत्वमप्यनिर्वचनीयं रजतवदेवोत्पन्नमिति तदवच्छिन्नरजतसत्त्वे तदवच्छिन्नाभावस्तस्मिन् कथं वर्तते ? इति चेत् । न । पारमार्थिकत्वस्याधिष्ठाननिष्ठस्य रजते प्रतिभाससम्भवेन

---

ऽभावो निषेधबुद्धिविषयः । तत्र हेतुमाह—**व्यधिकरणेति** । विरुद्धं व्यावहारिकं रजताद्यधिकरणं यस्य स व्यधिकरणः, स चासौ धर्मश्च लौकिकपारमार्थिकत्वं-तदवच्छिन्ना प्रातिभासिकरजते प्रतियोगिता यस्य तादृशाभावस्याभ्युपगमात् ।

नन्विदमनुपपन्नं व्यधिकरणधर्मस्यावगमेऽनवगमे चानुपपत्तेरितिशङ्कते-**नन्विति** । अवगमपक्षमवलम्ब्य परिहरति-**नेति** । नन्वत्र

---

प्रातिभासिकरजतप्रतियोगिताको व्यावहारिकत्वावच्छिन्नोऽभावो निषेधधीविषयः । यथा नैयायिकैः कपालेऽपि पटत्वेन घटाभावोऽङ्गीकृतस्तद्वद् व्यधिकरणाभावोऽस्माभिरपि स्वीक्रियत इत्यर्थः ।

(१) यत्र शुक्तिकादौ 'इदं रजतम्' इत्याकारा बुद्धिर्जायते तत्र रजते पारमार्थिकत्वम् (अत्र पारमार्थिकत्वमिति मूलेन लौकिकपारमार्थिकत्वं विवक्षितं तच्च व्यावहारिकत्वमेव) अवगतम् ? न वा ? नान्त्यः, रजतनिष्ठव्यावहारिकत्वानवगमे 'नेदं रजतम्' इत्यभावप्रत्यक्षानुपपत्तेः । तथा हि-अभावीया प्रतियोगिता रजते तदवच्छेदकं रजतत्वं तस्य तत्त्वज्ञानाभावेन-यथार्थज्ञानाभावेन-अभावप्रत्यक्षानुपपत्तिरिति । ननु प्रतियोगिनि रजते वर्तमानं प्रातिभासिकं रजतत्वमेव प्रतियोगितावच्छेदकं गृह्यते तद्विहाय कुतो व्यावहारिकं रजतत्वमन्विष्यत इति चेन्न । अभावज्ञानं येन रूपेण प्रतियोगिनं विषयी-

रजतनिष्ठपारमार्थिकत्वोत्पत्त्यनभ्युपगमात् । यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरङ्गीकारात् ।

अत एवेन्द्रियसन्निकृष्टतया जपाकुसुमगतलौहित्यस्य स्फटिके भानसंभवाद् न स्फटिकेऽनिर्वचनीयलौहित्योत्पत्तिः । नन्वेवं यत्र जपाकुसुमं द्रव्यान्तरव्यवधानादसन्निकृष्टं तत्र लौहित्यप्रतीत्या प्रातिभासिकलौहित्यं स्वीक्रियतामिति चेत् । न । इष्टत्वात् । एवं प्रत्यक्षभ्रमान्तरे

---

लौकिकपारमार्थिकत्वोत्पत्तिः कुतो नाभ्युपगम्यत इत्याशङ्क्याह-**यत्रेति**

यत एवमत एव यत्रारोप्यं सन्निकृष्टं न तत्र प्रातिभासिकवस्तूत्पत्तिः स्वीक्रियत इत्याह-**अत एवेति** । ननु यत्र सन्निकृष्टमपि जपाकुसुमं हस्तादिद्रव्यान्तरव्यवधानादसन्निकृष्टं तत्र स्फटिकेऽनिर्वचनीयलौहित्योत्पत्तिरङ्गीकार्येति शङ्कते-**नन्विति**। इष्टापत्त्या परिहरति-**नेति** नन्विन्द्रियसन्निकृष्टप्रभायाः स्फटिके भानसम्भवादनिर्वचनीयलौहित्योत्पत्तिरनुपपन्नेति चेन्न । अस्वच्छद्रव्यस्य जपाकुसुमस्य प्रभाया एवासिद्धेः । तदुक्तं पञ्चपादिकायाम्-'यथा पद्मरागादिप्रभा निराश्रयाऽप्युन्मुखोपलक्ष्यते न तथा जपाकुसुमादेः' इति । तथा चासन्निहितस्य परत्रावभासोऽध्यास इत्यध्यासलक्षणं न क्वापि व्यभिचरितमिति भावः । नन्

---

करोति नियमेन तद्रूपमेव प्रतियोगितावच्छेदकं भवति नेदं रजतमित्य अभावज्ञानं रजतं व्यावहारिकं नास्तीति प्रतियोगिनं व्यावहारिकत्वेन विषयीकरोतीति व्यावहारिकत्वमेव प्रतियोगितावच्छेदकं तस्यानवगमेऽभावप्रत्यक्षानुपपत्तिरिति । नाद्यः, प्रत्यक्षावभासो हि सन्निकृष्टवस्तुन एव भवतीति नियतम् । तथा च यथा रजतं प्रातिभासिकं तत्कालोत्पन्नमङ्गीकृतं तथैव तद्वृत्तिव्यावहारिकत्वस्यापि उत्पत्तिरङ्गीकार्या । अङ्गीकृतायां व्यावहारिकत्वोत्पत्तौ नेदं रजतमिति निषेधो न स्यात् । यतः व्यावहारिकत्वावच्छिन्ने रजतं व्यावहारिकत्वावच्छिन्नं रजतं नास्तीति तदा स्यात् । तच्च व्याहतमिति आक्षेप्तुराशयः । उत्तरग्रन्थः स्पष्टार्थः ।

शुक्त्यादौ रजताध्याससम्भवेऽप्यहङ्कारादेरात्मनि स न सम्भवति, तत्याधिष्ठानत्वानुपपत्तेः। अधिष्ठानं ह्यध्यस्यमानसदृशमंशद्वयवत्परिच्छिन्नमध्यस्यमानेन सहैकज्ञानविषयत्वयोग्यं च दृष्टमिति चेत्। उच्यते। अहङ्कारादिकार्य्यं ह्यज्ञानविकल्पित(१) एवाध्यस्यते, कार्य्यस्य कारणावच्छिन्न एवाध्यासौचित्यात्। न चैतावता समानाश्रयत्वभङ्गः, बिम्बप्रतिबिम्बयोरेकत्वेन तद्भङ्गाभावात्। तस्मादहङ्काराद्यधिष्ठानचैतन्यस्याभिधेयत्वासम्भवात्, प्रतीतितो घटादिव्यावृत्तत्वाकारेणाप्यहङ्कारादिभिरात्मनः सादृश्यसम्भवादविद्यया सांशत्वविषयत्वपरिच्छिन्नत्वानामपि सम्भवाद्दात्मा अधिष्ठानं भवत्येव। नापि प्रमाणदोषाभावः, अविद्याया एव दोषत्वात्। न चात्मनो विषयत्वादिसमाश्रयणेऽपसिद्धान्तः शङ्क्यः, अमुख्यस्य तस्य 'न तावदयमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वात्' इत्यादि वदद्भिर्भाष्यकारैरेव(२) समाश्रितत्वात्। किंचाव्यवधानेन प्रकाशमानत्वमेवाधिष्ठानत्वप्रयोजकं न त्वधिष्ठानस्य विषयत्वमपि गौरवात्। न च विषयत्वं विनाऽधिष्ठानस्याव्यवधानेन प्रकाशमानत्वमेव न दृष्टमिति वाच्यम्, यथाऽधिष्ठानस्यापरोक्षत्वं परमते क्वचिन्मनसा क्वचिन्नेत्राभ्यां तथाऽस्मन्मते स्वतोऽरीत्यत्र बाधकाभावात्। ननु स्वतोऽपरोक्षे कस्याध्यासो दृष्ट इति चेदज्ञानशोकमोहस्वप्नादेरिति गृहाण। तथा च परैर्यथाऽक्षिगम्ये शुक्तिकादौ रजतादिभ्रमः स्वीकृतस्तथा स्वतोऽपरोक्षे आत्मन्यहंकारादिविभ्रमेऽपि नास्ति बाधकम्। ननु स्वयं प्रकाशस्यात्मनो ज्ञाताज्ञातांशासम्भवात्कथमधिष्ठानतेति चेदुच्यते। दूरस्थयोर्वृक्षत्वेन प्रतीयमानयोरपि तावन्मात्ररूपो भेदो न ज्ञायत इत्यङ्गीकार्यम्, अन्यथा भेदभ्रान्त्यनुदयापाताद् एवं ज्ञातेऽप्यात्मन्यज्ञा-

(१) अज्ञानप्रतिबिम्बिते। कार्यस्य-अहंकारादेः। कारणावच्छिन्ने-अहंकारस्य कारणमज्ञानं तदवच्छिन्नमिति।

(२) नित्यज्ञानस्वरूपस्यात्मनोऽविषयत्वेऽपि बुध्याद्युपहितस्यात्मनो विषयत्वस्य भाष्यकारैः समाश्रितत्वादित्यर्थः।

ष्वपि प्रत्यक्षसामान्यलक्षणाऽनुगमो(१) यथार्थप्रत्यक्षलक्षणासद्भावश्च दर्शनीयः।

उक्तं प्रत्यक्षं प्रकारान्तरेण द्विविधम्, इन्द्रियजन्यं तदजन्यं चेति। तत्रेन्द्रियाजन्यं सुखादिप्रत्यक्षम्, मनस

---

तत्वसम्भवात्तस्याधिष्ठानत्वमुपपद्यते। भेदो हि वस्तुनः स्वरूपं न धर्मः, अन्योन्याश्रयापातादित्यन्यत्र(२)विस्तरः। उक्तमर्थमन्यत्राप्यतिदिशति-**एवमिति**। प्रत्यक्षभ्रमान्तरेषु पीतः शङ्खस्तिक्तो गुड इत्यादिषु। प्रत्यक्षसामान्यलक्षणं चित्त्वम्। प्रमाणचैतन्यस्याबाधितयोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं यथार्थप्रत्यक्षलक्षणम्।

उक्तप्रत्यक्षं पुनर्विभजते-**उक्तमिति**। तथा चेन्द्रियजन्यमित्यत्रेन्द्रियशब्देन ज्ञानेन्द्रियाणि पञ्च गृह्यन्ते, न तु नैयायिकवत् षट्। नापि

---

(१) प्रत्यक्षसामान्यलक्षण 'चित्त्वम्' तस्य भ्रमप्रमासाधारणप्रत्यक्षलक्षणत्वान्न भ्रमेऽतिव्याप्तिः, तस्यापि लक्ष्यत्वात्। यथार्थप्रत्यक्षलक्षणम् 'प्रमाणचैतन्यस्य अबाधितयोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वम्' तस्य भ्रमे नातिव्याप्तिः, विषयस्य बाधित्वाद् इति तात्पर्यम्।

(२) अन्यत्र-संक्षेपशारीरकप्रथमाध्याये तत्र हि—

अपरोक्षरूपविषयभ्रमधीरपरोक्षमास्पदमपेक्ष्य भवेत्।
मनसः स्वतो नयनतो यदि वा स्वपनभ्रमादिषु तथा प्रथितेः॥ ४१॥
स्वतोऽपरोक्षाचितिरत्र विभ्रमस्तथापि रूपाकृतिरेव जायते।
मनोनिमित्तं स्वपने मुहुर्मुहुर्विनाऽपि चक्षुर्विषयं स्वमास्पदम्॥ ४२॥
मनोऽवगम्येऽप्यपरोक्षताबलात्तथाऽम्बरे रूपमुपोल्लिखन्भ्रमः।
सितादिभेदैर्बहुधा समीक्ष्यते यथाऽक्षिगम्ये रजतादिविभ्रमः॥ ४३॥
ज्ञातेऽपि तावति ततोऽनतिरिक्तरूपेऽप्यज्ञानतः स्फुरणमस्फुरणं च दृष्टम्।
दूरस्थयोर्ननु वनस्पतिवस्तुनोस्तद्भेदो न दृष्टिविषयोऽवगते च ते नः॥४

इत्यादिकमुक्तमत्र टीकाकृता सर्वमर्थत उपनिबद्धमिति।

इन्द्रियत्वनिराकरणात् । इन्द्रियाणि पञ्च-घ्राणरसनचक्षुःश्रोत्रत्वगात्मकानि । सर्वाणि चेन्द्रियाणि स्वस्वविषयसंयुक्तान्येव प्रत्यक्षज्ञानं जनयन्ति । तत्र घ्राणरसनत्वगिन्द्रियाणि स्वस्थानस्थितान्येव गन्धरसस्पर्शोपलम्भाञ्जनयन्ति । चक्षुःश्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः । श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्यादिदेशगमनसम्भवात् । अत एवानुभवो भेरीशब्दो मया श्रुत इति । वीचीतरङ्गादिन्यायेन कर्णशष्कुलीप्रदेशेऽनन्तशब्दो-

---

दश कर्मेन्द्रियाणां ज्ञानाजनकत्वादित्याशयेनाह–**इन्द्रियाणि पञ्चेति** । तान्यपि कानीत्यपेक्षायामाह–**घ्राणेति** । तत्सद्भावे च रूपादिज्ञानानि सकरणकानि क्रियात्वाच्छिदिक्रियावद् इत्यनुमानं प्रमाणम् । 'तमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्याद्या श्रुतिश्च मानम् । इन्द्रियाण्यप्राप्यकारीणीति सौगतास्तान्निराकर्तुमाह–**सर्वाणि चेति** । तत्रापि फलबलकल्प्यस्वभावविशेषमाश्रित्याह–**तत्रेति** । ननु चक्षुषस्तत्संभवेऽपि कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रस्य विषयदेशगमनं न सम्भवति इत्याशङ्क्याह–**श्रोत्रस्यापीति** । आकाशादुत्पन्नं श्रोत्रमपि चक्षुरादिवत्परिच्छिन्नमिति भावः । यतः श्रोत्रस्य शब्ददेशगमनमत एव नैयायिकप्रक्रिया तु गौरवग्रस्तत्वादुपेक्ष्येत्याह–**वीचीति** । यथा वीचेस्तरङ्गस्ततोऽपि वीच्यन्तरं ततोऽपि तरङ्गान्तरमिति न्यायः । तथा भेरीदण्डसंयोगान्नभस्युत्पन्नाच्छब्दादसमवायिकारणाच्छब्दान्तरस्योत्पत्तिस्ततोऽन्यस्येति परम्परयाऽन्त्यशब्दस्य श्रोत्रसम्बन्धकल्पनागौरवम् । कदम्बमुकुलन्याय आदिपदाज्ज्ञेयः । (१) **प्रदेशे**–प्रदेशसम्बन्धा-

---

(१) कखपुस्तकयोः अप्रदेशे प्रदेशसम्बन्धार्थमित्यादिः पाठः, गपुस्तके तु प्रदेशो सम्बन्धार्थमित्यादिः पाठः, तयोरनुपपत्तिमालोक्य अस्माभिरेषः कल्पितः। अस्यार्थस्तु-मूले वीचीतरङ्गन्यायेन कर्णशष्कुलीप्रदेशे अनन्तशब्दोत्पत्तिकल्पना-

त्पत्तिकल्पनागौरवम् (१), भेरीशब्दो मया श्रुत इति प्रत्यक्षस्य भ्रमत्वकल्पनागौरवं च स्यात् । तदेवं व्याख्यातं प्रत्यक्षम् ॥

इति प्रत्यक्षं प्रमाणम् ॥



## अथानुमानपरिच्छेदः २

अथानुमानं निरूप्यते । अनुमितिकरणमनुमानम्

---

र्थम् । परमप्रकृतमुपसंहरति–तदेवमिति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिसुतशिवदत्तविरचितायां वेदान्तपरिभाषार्थदीपिकायां प्रत्यक्षपरिच्छेदः समाप्तः ॥ १ ॥



एवं सर्ववादिसंमतं ज्येष्ठं प्रत्यक्षप्रमाणं प्रथमं निरूप्य बहुवादिसम्मतत्वात्तदनन्तरमनुमाननिरूपणं प्रतिजानीते–अथेति । ( २ )अनुमीयतेऽनेनेत्यनुमानमनुमितिकरणमिति व्युत्पन्नमनुमानपदं लक्षणम् व्युत्पन्नं लक्ष्यमित्याशयेनानुमानं लक्षयति–अनुमितीति । अनु-

---

गौरवमुक्तं तत्रत्यं प्रदेशे इति पदं प्रतीकत्वेनोपादाय प्रदेशसम्बन्धार्थमित्युक्तम्, कर्णशष्कुलीप्रदेशे नानन्तशब्दोत्पत्तिः, परन्तु भेदीदेशे जातस्य शब्दस्य कर्णशष्कुल्या सह सम्बन्धाभावाद् भेरीदेशे जातशब्दाच्छब्दान्तरं ततोऽपि शब्दान्तरमिति कर्णशष्कुलीपर्यन्तमनन्तशब्दोत्पत्तयो वीचीतरङ्गन्यायेन कल्पन्ते तत् गौरवमिति ज्ञेयः ।

( १ ) यद्यपि सर्वेषु पुस्तकेषु भ्रमत्वकल्पनागौरवमिति पाठः, तथाऽप्यत्र 'कल्पनायान्तु गौरवम्' इति पाठो ग्रन्थानुगुण इति प्रतिभाति ।

(२)अनुमीयते–अनुमितिप्रमा उत्पाद्यते अनेन तद्–व्याप्तिज्ञानमनुमानम् ( अनुमानशब्दप्रवृत्तिनिमित्तम् ) अर्थात् व्याप्तिज्ञानमनुमितिप्रमाकरणमि

अनुमितिश्च व्याप्तिज्ञानत्वेन(१)व्याप्तिज्ञानजन्या ।

मानलक्षणघटकानुमितेर्लक्षणमाह—**अनुमितिश्चेति** । व्याप्तिज्ञानत्वेन न तु विषयत्वादिना । व्याप्तिश्च वक्ष्यमाणा तज्ज्ञानं च व्यभिचारज्ञानविरोधिज्ञानमिति पर्यवस्यति । नन्वत्र व्याप्तिपदं व्यभिचारज्ञानविरोधिपरं न तु ग्रन्थकृदभिमतव्याप्तिपरं, तेन तज्जनके(२) अत्यन्ताभावगर्भसाध्याभाववदवृत्तित्वादिरूपव्याप्तिज्ञाने(३)ऽन्योन्याभावगर्भसाध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यादिरूपव्याप्तिज्ञाने च (४)कारणतावच्छेदकसत्वादनुमितिर्भवति इदानीं तु न स्यादिति चेन्न ।

व्याप्तिज्ञाने प्रयुज्यमानस्य अनुमानपदस्य करणव्युत्पत्त्याऽऽश्रयणे अनुमानलक्षणत्वं व्युत्पत्त्यनाश्रयणे केवलसङ्केतमात्राश्रयणे लक्ष्यपरत्वमिति भावः ।

(१) व्याप्तिज्ञानत्वेनेति। धूमो वह्निव्याप्य इत्याद्यात्मकव्याप्तिप्रकारकज्ञानत्वेनेत्यर्थो विवक्षितः। अन्यथा–व्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्य अनुमितिं प्रति करणत्वस्वीकारे तु व्याप्तिरिति ज्ञानादपि पर्वतो वह्निमानित्यनुमित्यापत्तिः। व्याप्तिप्रकारकज्ञानत्वविवक्षणे तु धूमो वह्निव्याप्य इत्यस्यैव व्याप्तिप्रकारकज्ञानत्वं व्याप्तिरिति ज्ञानस्य तु व्याप्तित्वप्रकारकज्ञानत्वमिति नापत्तिः काचिदति। वह्निव्याप्य धूमवन्तं पर्वतं जानामीत्यनुव्यवसायस्यापि व्याप्तिज्ञानजन्यत्वं, तथाऽपि अनुव्यवसायनिष्ठजन्यतानिरूपितजनकत्वं व्याप्तिज्ञानस्य विषयत्वेन भवति न व्याप्तिज्ञानत्वेनेति। एवं व्याप्तिज्ञानजन्यस्मृतिशाब्दज्ञानव्याप्तिज्ञानध्वंसादिष्वपि बोध्यम्। अत्रेदं तत्त्वम्—अयं घट इत्याकारकज्ञाने विषयो घटः सोऽपि विषयत्वेन ज्ञानजनको भवति यथा तथैवोक्तानुव्यवसायादीनि ज्ञानानि व्याप्तिज्ञानजन्यानि तेषु उक्तानुमितिलक्षणस्यातिव्याप्तिः स्यादतो व्याप्तिज्ञानत्वेनेति लक्षणे निवेशितमिति ।

(२) तज्जनके–अनुमितिजनके । अत्यन्ताभावो गर्भे मध्ये यस्य तच्च साध्याभाववदवृत्तित्वादिरूपव्याप्तिज्ञानं च तस्मिन्निति विग्रहः। इदं पूर्वपक्षव्याप्तिलक्षणेषु प्रथमव्याप्तिलक्षणम् ।

(३) इदञ्च पूर्वपक्षव्याप्तिलक्षणेषु तृतीयं लक्षणम् ।

(४) कारणता व्याप्तिज्ञाने तदवच्छेदकं व्याप्तिज्ञानत्वं तस्य पञ्चस्वपि लक्षणेषु सत्वाद् अनुमितित्वं भवतीत्यर्थः ।

व्याप्तिज्ञानानुव्यवसायादेस्तत्त्वेन तज्जन्यत्वाभावान्नानुमितित्वम्।

अनुमितिकरणं च व्याप्तिज्ञानं तत्संस्कारोऽवान्तरव्यापारः, न तु तृतीयलिङ्गपरामर्शोऽनुमितौ करणम्।

---

अत्यन्ताभावादिगर्भव्याप्तिज्ञानस्यापि व्यभिचारज्ञानविरोधिज्ञान एव पर्यवसानात्, वस्तुतो व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वस्य वक्ष्यमाणत्वाच्च। तादृशावच्छेदकविवक्षायाः फलमावेदयति-**व्याप्तिज्ञानेति। तत्त्वेन**-व्याप्तिज्ञानत्वेन। आदिपदं तज्जन्यस्मृतिशाब्दज्ञानादिसंग्रहार्थम्। अनुव्यवसायस्मृतिशाब्दज्ञानादिषु विषयत्वस्वसमानविषयानुभवत्वपदार्थज्ञानत्वादिना हेतुत्वात्तत्वेनाहेतुत्वमित्यर्थः।

ननु व्याप्तिज्ञानस्य किमनुमितिजनकत्वमात्रमुत तत्करणत्वमित्यपेक्षायामाह-**अनुमितिकरणं चेति।** एतेन व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यं ज्ञानमनुमितिस्तत्करणमनुमानं तच्च लिङ्गपरामर्श इति प्रत्युक्तम्, व्याप्तिज्ञानस्यैव तत्करणत्वसम्भवे तदतिरिक्तपरामर्शाङ्गीकारस्यानौचित्यात्। नाप्यनुमितौ लिङ्गं करणमयोग्यलिङ्गकानुमितौ परामर्शस्य व्यापारत्वासम्भवेन तत्करणत्वासम्भवतया व्यभिचारात्। तस्मादनुमितिकरणत्वाद् व्याप्तिज्ञानमेवानुमानशब्दाभिधेयं, न तु लिङ्गतत्परामर्शाविति भावः। ननु व्याप्तिज्ञानस्य करणत्वे तद्व्यापारो वक्तव्यः, व्यापारवदसाधारणकारणस्य करणत्वादित्यपेक्षायामाह-**तत्संस्कार इति।** व्याप्तिज्ञानसंस्कार इत्यर्थः। ननु महानसादौ धूमादिज्ञानं प्रथमम्, पक्षे ततो द्वितीयम्, ततो व्याप्तिं स्मृत्वा पक्षे धूमादिपरामर्शात्मकं तृतीयम्, ततो वह्न्याद्यनुमितिरिति तृतीयलिङ्गपरामर्शात्मकं ज्ञानमनुमितिकरणमिति वदन्ति नैयायिकाः। अतो भवद्भिरपि तथैव किमिति नाभ्युपगम्यते इत्याशङ्क्याह-**न तु तृतीयेति।** व्याप्तिविशिष्टपक्ष-

तस्यानुमितिहेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वात्।
न च संस्कारजन्यत्वेनानुमितेः स्मृतित्वापत्तिः, स्मृति-

---

धर्म्मताज्ञानं परामर्शः। प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः(१)। व्याप्यस्य पक्षवृत्तित्वं पक्षधर्म्मता। तथा च वह्निव्याप्यधूमवानयमित्यादिज्ञानमुक्तलक्षणपरामर्शात्मकं, तत्तु नानुमितिकरणमित्यर्थः। तत्र हेतुमाह—**तस्यानुमितीति**। पक्षधर्म्मताज्ञानद्वारोद्बुद्धे संस्कारे व्याप्तिज्ञानस्यान्वयव्यतिरेकाभ्यामनुमितिजनकत्वाभ्युपगमस्यावश्यकतया (२)तद्रहितस्य परामर्शस्य तद्धेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वमित्यर्थः। उपलक्षणमिदम्। अनुमितिकरणं लिङ्गम्, तत्परामर्शोऽवान्तरव्यापार इति वैशेषिका मन्वते। तन्न साधु, विनष्टस्यानागतस्य च लिङ्गस्य तदानीमभावेन ततोऽनुमित्यनापत्तेरित्यपि द्रष्टव्यम्।

ननु संस्कारजन्यं ज्ञानं हि स्मृतिरिति स्मृतिलक्षणं तस्य चानुमितावप्यनुगमात् तस्यापि स्मृतित्वापत्तिरित्याशङ्क्य परिहरति—**न चेति**। तत्र हेतुमाह—**स्मृतीति**। नन्वेवं तर्हि तत्तत्प्रागभावजन्यत्वरूपप्रयोजकस्य सर्वत्र सुलभत्वात् तत्र तत्र प्रयोजकान्तराभ्युपगमोऽनर्थकः

---

(१) इयं सिद्धान्तलक्षणव्याप्तिः। पर्वतो वह्निमान् धूमाद् इत्यत्र लक्षणसमन्वयः। यथा लक्षणघटकोऽभावो घटाभावः, स च प्रतियोगिनो घटस्यासमानाधिकरणोऽथ च हेतोर्धूमस्याधिकरणं पर्वतस्तत्समानाधिकरणश्च तादृशाभावीया प्रतियोगिता घटे प्रतियोगितावच्छेदकं घटत्वम् अनवच्छेदकं वह्नित्वं तदवच्छिन्नो वह्निस्तेन वह्निना समं तस्य हेतोर्धूमस्य सामानाधिकरणं पर्वतादाविति।

(२) संस्कारे उद्बुद्धे सति व्याप्तिज्ञानसत्वेऽनुमितिस्तदभावेऽनुमित्यभाव इत्यन्वयव्यतिरेकाभ्यां व्याप्तिज्ञानस्यावश्यकतया तद्रहितस्य—अन्वयव्यतिरेकरहितस्य—परामर्शस्य अनुमितिहेतुत्वासिद्ध्या, तत्करणत्वस्य—अनुमितिकरणत्वस्य दूरनिरस्तत्वात्। कारकविशेषः करणं कारकसामान्यत्वरूपहेतुत्वासिद्ध्या तद्विशेषरूपकरणत्वस्य अत्यन्तमसम्भावितत्वादित्यर्थः।

प्रागभावस्य संस्कारमात्रजन्यत्वस्य वा स्मृतित्वप्रयोजकतया(१) संस्कारध्वंससाधारणसंस्कारजन्यत्वस्य तदप्रयोजकत्वात्।

न च यत्र व्याप्तिस्मरणादनुमितिस्तत्र कथं संस्कारो हेतुरिति वाच्यम्। व्याप्तिस्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमितिहेतुत्वात्(२)। न हि स्मृतेः संस्कारनाशकत्वनियमः(३), स्मृतिधारादर्शनात्। न चानुद्बुद्धसंस्कारादप्यनु-

---

स्यादित्यरुचेः पक्षान्तरमाह–**संस्कारमात्रेति**।

ननु व्याप्तिस्मरणादनुमितिस्थले संस्कारजन्यत्वं व्यभिचरितं व्याप्तिस्मृत्या संस्कारनाशादित्याशङ्क्य परिहरति–**न चेति**। व्याप्तिस्मृतिजन्यानुमितिस्थलेऽपि संस्कारनाशानभ्युपगमेन व्यभिचाराभावादित्याह–**व्याप्तिस्मृतीति**। स्मृतिधारादर्शनात्स्मृतेः संस्कारनाशकत्वनियमो नास्तीत्याह–**न हीति**। ननु संस्कारस्यैवानुमितिहेतुकत्वे अनु-

---

(१) तथा च स्मृतिप्रागभावजन्यं ज्ञानं स्मृतिरिति संस्कारमात्रजन्यं ज्ञानं स्मृतिरिति वा स्मृतिलक्षणे सति संस्कारध्वंससाधारणसंस्कारजन्यानुमितौ न स्मृतित्वापत्तिरिति।

(२) व्याप्तिस्मृतिजन्यानुमितिस्थलेऽपि व्याप्तिसंस्कारस्यैव अनुमितिहेतुत्वं लाघवादनुभवानुरोधाच्चेति भावः।

(३) योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिविशेषगुणनाश्यत्वम् इति तार्किकाः। तथा च संस्कारात् स्मृत्युत्पत्तौ संस्कारस्य नाशोऽवश्यम्भावीति। तन्न। संस्कारनाशाभ्युपगमे स्मृतिधारास्थले द्वितीयस्मृतिव्यक्तेरुत्पत्तिः अकारणिका स्यात्। न च एकसंस्कारव्यक्तिनाशेऽपि संस्कारव्यक्त्यन्तरात्स्मृत्युत्पत्तिरिति वाच्यम्, संस्कारानन्त्यकल्पने गौरवात्प्रमाणाभावाच्च। ननु संस्कारव्यक्त्यानन्त्यं मास्तु परमेकेन संस्कारेण उद्बोधकसहकृतेन या स्मृतिव्यक्तिरुत्पादिता सैव स्वयं

मित्यापत्तिः, तदुद्बोधस्यापि सहकारित्वात्।

एवं च अयं धूमवानिति पक्षधर्मताज्ञानेन, धूमो वह्निव्याप्य इत्यनुभवाहितसंस्कारोद्बोधे च सति, वह्निमानित्यनुमितिर्भवति, न तु मध्ये व्याप्तिस्मरणं तज्जन्यवह्निव्याप्यधूमवानित्यादिविशेषणविशिष्टं ज्ञानं वा हेतुत्वेन कल्पनीयम्, गौरवात् मानाभावाच्च।

तच्च व्याप्तिज्ञानं वह्निविषयकज्ञानांश एव करणम्, न तु

---

बुद्धादपि(१) तस्मादनुमितिप्रसङ्ग इत्याशङ्क्य परिहरति-न **चेति**। तदुद्बोधस्य पक्षधर्म्मताज्ञानजन्यस्य संस्कारोद्बोधस्य।

फलितमाह—**एवञ्चेति**। व्याप्तिज्ञानस्य करणत्वे व्याप्तिज्ञानसंस्कारस्य तद्व्यापारत्वे पक्षधर्म्मताज्ञानजन्यसंस्कारोद्बोधस्य सहकारित्वे च सिद्धे सति।

पर्वतो वह्निमानित्येकमेव ज्ञानमनुमित्यात्मकमिति येऽभिमन्यते तान्निराकर्तुमाह-**तच्चेति**। सन्निकृष्टपक्षकानुमितिस्थले ज्ञानद्वयस्यो-

---

विनश्यती संस्कारमपरमुत्पाद्य विनश्येद् उत्पन्नश्च संस्कारोऽन्यां स्मृतिमिति धारायाः सामञ्जस्यमस्त्विति चेन्न। एतादृशकल्पनाऽपेक्षयाऽपि येनानुभवेन यः संस्कारो जनितः, तेन च संस्कारेण उद्बोधकसहकारिणा स्मृतिजनने जनितया स्मृत्या स्वजनकसंस्कारस्य नाशमकुर्वत्या तस्यैव संस्कारस्य दृढीकरणकल्पनायां महल्लाघवम्। तथा चाऽनुभवोऽप्यत्रानुगुणः, यया पूर्वेद्युः श्रुतः शास्त्रार्थोऽद्य स्मृतो दृढीभूत इति तमेव शास्त्रार्थं दृढीभूतमादर्शयति। अन्यथा श्रुतशास्त्रार्थसंस्कारस्य स्मृतिजननानन्तरं विनाशे तया च स्मृत्या संस्कारजनने दृढत्वं कथं स्यात्। किञ्चैवं संस्कारेण स्मृत्युत्पत्तिः स्मृत्युत्तरं जायमानेन तेनैव स्मृतिनाशः, इति संस्कारस्यैव स्मृतिजनकत्वविनाशकत्वे तस्यैव पुनः स्मृतेरुत्पन्नस्य स्मृतिजन्यत्वनाश्यत्वे, इत्यादिबहुविरुद्धपदार्थकल्पनमापद्येत, तस्मान्न स्मृतेः संस्कारनाश्यत्वमिति पक्षः श्रेयान्।

(१) अनुद्बोधादपि इति पाठः-गपुस्तके। अग्रेऽपि तदुद्बोधस्य इत्यस्य स्थाने तदुद्बुद्धस्य इति पाठश्च।

पर्वतविषयकज्ञानांश इति पर्वतो वह्निमानिति ज्ञानस्य वह्न्यंश एवानुमितित्वं न पर्वताद्यंशे, तदंशे प्रत्यक्षत्वस्योपपादितत्वात्।

व्याप्तिश्च अशेषसाधनाश्रयाश्रितसाध्यसमानाधिकरण्य

---

पपादितत्वादित्याह—**पर्वत इति**। पर्वतं पश्यामि वह्निमनुमिनोमीत्यनुभवबलाज्ज्ञानद्वयस्यावश्यकतया जातित्वोपाधित्वपरिभाषायाश्चाप्रामाणिकत्वाद् ज्ञानस्यांशभेदेन परोक्षत्वापरोक्षत्वयोरुपपादितत्वादित्यर्थः।

नन्वनुमितिकरणव्याप्तिज्ञाने (१)का व्याप्तिरित्यपेक्षायां व्याप्तिस्वरूपमाह—**व्याप्तिश्चेति**। अशेषं च तत्साधनं च तस्याश्रयस्तदाश्रितं यत्साध्यं तेन समं हेतोः सामानाधिकरण्यं रूपं यस्याः सा, (१)साधनतावच्छेदकावच्छिन्नसाधनाश्रयाश्रितसाध्यतावच्छेदकानच्छिन्नसाध्यसामानाधिकरण्यरूपेति यावत्। एवं च यत्किञ्चिद्वह्न्यादिसाधनाश्रयाश्रित यत्किंचिद्धूमादिसाध्यसामानाधिकरण्यमादाय पर्वतो धूमवान् वह्नेरित्याद्यसद्धेतौ नातिप्रसङ्गः। नन्वेवंभूता व्याप्तिः केन गृह्यते? न तावत्तर्केण व्याप्यारोपेण व्यापकारोपरूपस्य तस्य व्याप्त्यधीनत्वात्। नापि सह

---

(१) ज्ञाने स्वीकृते का व्याप्तिरिति पाठः-गपुस्तके।

(२) वह्निमान् धूमाद् इत्यत्र साधनं धूमः साधनता धूमनिष्ठा तदवच्छे धूमत्वं तदवच्छिन्नाः पर्वतीयचत्वरीयादिधूमव्यक्तयः साधनरूपाः तदाश्रय पर्वतादयः, तानेवाश्रिता याः साध्यव्यक्तयः-ताश्चापि साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्ना एव-तासां धूमत्वावच्छिन्नधूमव्यक्तीनां वह्नित्वावच्छिन्न वह्निव्यक्तीनां यत् समानाधिकरण्यं-समानाधिकरणे पर्वतादौ वृत्तित्वं 'यत्र यत्र धूमस्तत्र तत्र वह्निः' इत्यादिरूपं-तदेव रूपं यस्या व्याप्तेः सा तथा। धूमवान्वह्नेरित्यादौ यथा कथाचित् महानसीयवह्निव्यक्त्या महानसीयधूमव्यक्ति साधनेऽपि नातिप्रसङ्गः। यद्यपि तत्र महानसीयधूमवह्न्योः सामानाधिकरण्यं दृष्टं तथाऽप्ययोगोलके व्यभिचारात् साधनतावच्छेदकावच्छिन्नेन वह्नि सामानाधिकरण्यं नास्तीति भावः।

रूपा । सा च व्यभिचारादर्शने सति सहचारदर्शनेन गृह्यते । तच्च सहचारदर्शनं भूयो दर्शनं सकृद्दर्शनं वेति विशेषो नादरणीयः । सहचारदर्शनस्यैव प्रयोजकत्वात् ।

तच्चानुमानमन्वयिरूपमेकमेव । न तु केवलान्वयि । सर्वस्यापि धर्मस्यास्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेन

---

चारदर्शनेन, सकृद्दर्शने भूयोदर्शने च तस्मिन् क्वचिद्व्यभिचारोपलम्भादित्याशङ्क्याह—**सा चेति** । तच्च सकृद्दर्शनं भूयोदर्शनं वा इत्यपेक्षायामाह—**तच्चेति** । गृहीतसहचारस्य व्याप्तिग्रहदर्शनादगृहीतसहचारस्य व्याप्तिग्रहादर्शनाच्चेत्यन्वयव्यतिरेकाभ्यां सहचारदर्शनस्य हेतुत्वसिद्ध्या लाघवात् तस्यैव प्रयोजकत्वं, न तु तद्विशेषस्येत्याह—**सहचारेति** ।

एवं व्याप्तिज्ञानस्यानुमितिकरणत्वेनानुमानत्वं प्रसाध्येदानीमनुमानत्रैविध्यमपि नैयायिकादिवदस्मन्मते नास्तीत्याशयेनाह—**तच्चानुमानमिति** । न तु केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्त्रिविधमित्यर्थः । **अन्वयिरूपम्**—अन्वयमुखव्याप्तिज्ञानरूपम् । ननु परोक्तभेदानां जागरूकत्वे कथमनुमानस्यैकरूपत्वमित्याशङ्क्याद्यभेदं निराचष्टे—**न त्विति** । (१)तद्धि अत्यन्ताभावाप्रतियोगिसाध्यकम् । न चास्मन्मते ब्रह्मातिरिक्तं किञ्चिदप्यत्यन्ताभावाप्रतियोगि 'नेह नानास्ति किंचन' क० २-१० इत्यादिश्रुत्या सर्वस्यापि ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वावधारणादिति तथाभूतकेवलान्वयित्वस्यासिद्धेरित्याह—**सर्वस्यापीति** ।

---

(१) तद्धीति । केवलान्वय्यनुमानं हि अत्यन्ताभावस्य प्रतियोगि साध्यं यस्य तद् अत्यन्ताभावाप्रतियोगिसाध्यकम् । यथा वाच्यं ज्ञेयत्वादित्यादि । नैयायिकमते वाच्यत्वज्ञेयत्वयोः कुत्रापि विरहाभावेन लक्षणसमन्वयः ।

अत्यन्ताभावाप्रतियोगिसाध्यकत्वरूपकेवलान्वयित्वस्यासिद्धेः।

नाप्यनुमानस्य व्यतिरेकिरूपत्वम्(१)। साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमि-

---

एवं प्रथमभेदं निराकृत्य केवलव्यतिरेकिरूपं द्वितीयभेदं निराचष्टे-**नाप्यनुमानस्येति**। **व्यतिरेकिरूपत्वं**-केवलव्यतिरेकिरूपत्वम्। साधनेन हि साध्यमनुमीयते, तत्र च साध्यसाधनयोर्व्याप्तिज्ञानमुपयुज्यते, न तु साध्यभावसाधनाभावयोरित्याह-**साध्याभावे इति**। तथा च पृथिवी इतरेभ्यो भिद्यते गन्धत्वाद् यदितरेभ्यो न भिद्यते न तद्गन्धवद् यथा जलादीत्याद्युदाहरणानि त्वर्थापत्तेर्गन्धवत्त्वस्येतरभेदोपपादकत्वादिति भावः। नन्वन्वयव्याप्तिज्ञानरहितस्य व्यतिरेकव्याप्ति-

---

(१) व्यतिरेकव्याप्तिज्ञानजन्यानुमितिकारणत्वमनुमानस्य व्यतिरेकित्वम्। साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्यतिरेकव्याप्तिः। अन्वयव्याप्तौ तु धूमसत्त्वे वह्निसत्त्वमिति व्याप्येन धूमेन व्यापकस्य वह्नेरारोपो भवति, अभावयोस्तु तद्विपरीतः कार्यकारणभावः, यथा यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव इति। तथा च साध्यस्य वह्नेः अभावेन साधनस्याभावः साध्यते तस्य कुत्रोपयोगः? साधनस्य धूमस्य प्रत्यक्षसिद्धत्वात्तत्र अनुमानोपयोगाभावात्। पृथवी इतरेभ्यो भिद्यते गन्धवत्वाद् इत्यत्रान्वयदृष्टान्ताभावाद् यन्न गन्धवत् तन्न पृथिवीतरभिन्नम् इति साधनाभावेन साध्याभावसाधनपुरःसरं पृथिव्यामितरभेदः साध्यते। तस्या व्यतिरेकव्याप्त्याः साध्यस्यानुमितिप्रमायामनुपयोग एव, अन्यव्याप्तिज्ञानस्यापि अन्यलिङ्गकानुमितिहेतुत्वेऽतिप्रसङ्गात्। तथा हि, साध्याभावनिष्ठा या साधनभावनिरूपिता व्याप्तिः, यथा गन्धाभावव्याप्य इतरभेदाभाव इति, तया चेत् पृथिव्यां गन्धवत्वं साध्यते ततोऽन्यगतेन अभावगतेन-व्याप्तिज्ञानेन अन्यस्यां-पृथिव्यां गन्धवत्वं साध्यत इत्यापन्नम्। तथा च कृतकत्वमनित्यत्वव्याप्यम् इति कृतकत्वनिष्ठानित्यत्वनिरूपितव्याप्तिज्ञानेन धूमाद् वह्न्यनुमित्यापत्तिः स्यात्। भवति हि धूमो वह्निव्याप्य इत्यस्मादेव व्याप्तिज्ञानाद् वह्न्यनुमितिरिति,, न तु कृतकत्वनिष्ठानित्यत्वनिरूपितव्याप्तिज्ञानेनेति दिक्।

तावनुपयोगात् । कथं तर्हि धूमादावन्वयव्याप्तिमविदुषोऽपि (१)व्यतिरेकव्याप्तिज्ञानादनुमितिः ? अर्थापत्तिप्रमाणादिति वक्ष्यामः ।

अत एवानुमानस्य नान्वयव्यतिरेकिरूपत्वं व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वात् ।

---

ज्ञानादनुमितिर्भवति, भवन्मते सा कथमुपपद्यते इति शङ्कते-**कथं तर्हीति** । तस्यार्थापत्तिप्रमाणाद् वह्न्यादिज्ञानं, न त्वनुमानादतो नोक्तदोष इत्याह **अर्थापत्तीति** । वक्ष्यमाणरीत्या अर्थापत्तिप्रमाणस्यावश्यकतया व्यतिरेक्यनुमानस्य तदन्तर्भावसम्भवे तत्पृथक्त्वस्याभ्युपगमो न युक्त इति भावः ।

तृतीयभेदं निराकरोति-**अत एवेति** । यतो व्यतिरेकव्याप्तिज्ञानस्य नानुमितिजनकत्वमत एवेत्यर्थः । अन्वयव्यतिरेकिरूपे त्वन्वयव्याप्तिज्ञानस्यैवानुमितिजनकत्वे व्यतिरेकव्याप्तिज्ञानस्य तज्जनकत्वाभ्युपगमस्य वैयर्थ्यादित्याह-**व्यतिरेकेति** । अत्र केचित् (२)स्ववृत्तिविरोधि-

---

(१) व्यतिरेकव्याप्तिज्ञानादनुमितिर्जायते । यथा वह्न्याभावव्याप्यो धूमाभाव इति व्यतिरेकमात्रव्याप्तिज्ञानवतः पुरुषस्यापि पर्वतेऽविच्छिन्नमूलधूमदर्शनेन धूमाभावाभावरूपस्य धूमस्य विद्यमानतया वह्न्यभावव्याप्यस्य धूमाभावस्य च अविद्यमानतया व्यापकस्य वह्न्यभावस्याप्यभावः, अर्थाद् 'वह्निमान् पर्वत' इत्याकाराऽनुमितिरुत्पद्यते । व्यतिरेकव्याप्त्यस्वीकारे कथमुत्पत्तिरस्या अनुमितेरित्याक्षेप्तुरभिप्रायः ।अर्थापत्तिप्रमाणादिति समाधातुर्ग्रन्थकारस्यायमाशयः । एतादृशस्थले वह्निमनुमिनोमीत्यनुव्यवसायाभावान्नास्माभिरनुमितिः स्वीक्रियते, किन्तु वह्निं कल्पयामीत्यनुव्यवसायबलादर्थापत्तिरेवेति धर्मराजाध्वरीन्द्रः । विवरणकारानुयायी रामकृष्णस्तदात्मजोऽपि पित्रा खण्डितं व्यतिरेक्यनुमानं पुनरुज्जीवयति शिखामण्यामिति द्रष्टव्यम् । अनेन शिवदत्तेन मूलकारग्रन्थसमर्थनं कृतमिति संक्षेपः ।

(२) अत्र केचिदित्यस्य (८९) पृष्ठस्थेन वदन्तीत्यनेन दूरव्यवहितेन

वृत्तिमदत्यन्ताभावाप्रतियोगित्वं साध्यस्य केवलान्वयित्वम् । तत्साधकत्वं(१) केवलान्वयिलिङ्गलक्षणं (२)प्रमेयत्वादेश्च स्वसमानाधिकरणपारमार्थिकत्वावच्छिन्नात्यन्ताभवप्रतियोगित्वेऽपि स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वात्केवलान्वयित्वम् । न च (३)श्रुतिविरोधः शङ्क्यः, तस्या अपि पारमार्थिकत्वावच्छिन्नद्वैताभावपरत्वात् । तदुक्तं विवरणे–'आगमेन च द्वैतस्य तत्त्वांशबाधात्' इति । न च लक्षणे स्ववृत्तिविरोधीति व्यर्थं, तस्याव्याप्यवृत्तिकस्यापि संयोगात्यन्ताभावादेः संग्रहार्थत्वात् । न च ब्रह्मणः (४)स्वप्रकाशत्वेन तत्र स्वरूपेणापि प्रमेयत्वाभावात्कथं केवलान्वयित्वमिति वाच्यम्, ब्रह्मणोऽपि वृत्तिलक्षणप्रमाविषयत्वात् । न चैतावता स्वप्रकाशत्वविरोधः, अनुपहितस्यैव तथात्वात् । न चैवमपि नाभिधेयत्वं केवलान्वयि, ब्रह्मणोऽनभिधेयत्वादिति वाच्यम् ।

संबन्धः । केचित् शिखामणिकाराः । स्ववृत्तिरित्यादेरयमर्थः । वृत्तिशब्देन आधेयता ग्राह्या स्वशब्देन घटादयो ग्राह्याः, न प्रमेयत्वादीनि, प्रमेयत्वादिवृत्तिविरोधिवृत्तिमदत्यन्ताभावस्याप्रसिद्धत्वात् । तथा च घटादिनिष्ठा या आधेयता तद्विरोध्याधेयतावान् यो घटशून्यदेशस्थो घटात्यन्ताभावस्तत्प्रतियोगित्वं घटादेः अप्रतियोगित्वं प्रमेयत्वादाविति लक्षणसमन्वयः ।

(१) तस्य–केवलान्वयिसाध्यस्य–साधकं तत्साधकं तस्य भावस्तत्साधकत्वम् । केवलान्वयिसाध्यविषयानुमितिजनकत्वं केवलान्वयिलिङ्गस्य लक्षणम् ।

(२) प्रमेयत्वादेश्च केवलान्वयित्वन्वयः । यद्यप्यत्र अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमिति लक्षणस्य प्रमेयत्वाधिकरणे प्रमेये घटे प्रमेयः पारमार्थिको न इत्याकारकस्यात्यन्ताभावस्य प्रतियोग्येव प्रमेयो घट इत्यव्याप्तिः, तथाऽपि स्ववृत्तिविरोधिवृत्तीत्यादेरेव केवलान्वयिलक्षणत्वेन नाव्याप्तिरिति भावः ।

(३) 'नेह नानास्ति' इत्यादिश्रुतिः ।

(४) इतराप्रकाश्यत्वे सति प्रकाशमानत्वं स्वप्रकाशत्वम्, अपराधीनप्रकाशवत्वमित्यर्थः । तत्र–ब्रह्मणि । स्वरूपेणापि–प्रमेयत्वेनापि । कथं केवलान्वयित्वं प्रमेयत्वादीनामित्यर्थः । न कथमपि संभवतीत्याक्षेपार्थः किंशब्दः ।

ब्रह्मणो लक्ष्यतया वाच्यत्वाभावेऽपि पदजन्यज्ञानविषयत्वात्, वाच्यत्वस्यापि ग्रन्थकृता वक्ष्यमाणत्वाच्च । न चैवं प्रमेयत्वादिविरोधिवृत्तिमदत्यन्ताभावस्याप्रसिद्धत्वात्तत्र लक्षणाव्याप्तिः, स्ववृत्तिविरोधिवृत्तिमदत्यन्ताभावप्रतियोगिनो घटादयः प्रसिद्धास्तदन्यत्वस्य प्रमेयत्वादावपि सत्त्वात् । एवं धूमादावन्वयव्याप्तिमविदुषोऽपि (१)व्यतिरेकव्याप्तिज्ञानाद्वह्निज्ञानमित्यविवादम् । तच्चानुमितिरेव वह्निमनुमिनोमीत्यनुव्यवसायात् । न च क्लृप्तकारणव्याप्तिज्ञानस्याभावात् कथमनुमितिरित्युक्तमिति वाच्यम्, व्यतिरेकव्याप्तिज्ञानस्य सत्त्वात् । न चैतदनुमित्यकरणमिति वाच्यम्, स्वव्यभिचारधीविरोधिधीविषयव्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्यानुमितिहेतुत्वात्, अस्य च व्यतिरेकव्याप्तिज्ञानसाधारणत्वात् ( २ ) ।

( ३ )नन्वनुमानस्य व्यतिरेकितयाऽपि प्रामाण्याभ्युपगमे तत्रैवार्थापत्तेरन्तर्भावपत्तौ सा पृथक्प्रमाणमिति राद्धान्तो भज्येतेति चेत्तर्ह्यनुमानस्य प्रामाण्ये संशयाद्युत्तरप्रत्यक्षस्थले चक्षुरादेः प्रामाण्यं न स्यात्, तत्रानुमितिसामग्रीसत्त्वेनानुमितेरेवोत्पत्तेः । तथा शाब्दस्थलेऽपि शब्दो न प्रमाणं स्यात्, एते पदार्थास्तात्पर्यविषयपरस्परसंसर्गवन्त आकाङ्क्षादिमत्पदकदम्बस्मारितत्वादित्यनुमानेनैव क्लृप्तप्रमाणाभावेन तात्पर्य-

( १ ) यत्र यत्र धूमस्तत्र तत्र वह्निरित्यन्वयव्याप्तिः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति, यथा जलह्रद इयं व्यतिरेकव्याप्तिः । यस्य पुंसोऽन्वयव्याप्त्यज्ञानं तस्य व्यतिरेकव्याप्त्याऽपि पर्वते धूमदर्शनानन्तरं प्रमा जायते, सा यथार्था प्रत्यक्षशब्दोपमानार्थापत्त्यनुपलब्ध्यजन्या अतोऽनुमितिरेव । अनुमिनोमीत्यनुव्यवसायेनाप्यस्या अनुमितित्वमुररीकार्यमिति भावः ।

( २ ) व्यतिरेकव्याप्तिज्ञानमपि अनुमितिकरणमित्यर्थः ।

( ३ ) व्यतिरेक्यनुमानस्वीकारे अर्थापत्तेः पृथक् प्रमाणाभ्युपगमो व्यर्थश्चेद् अनुमानेनैव प्रत्यक्षादिप्रमोत्पत्तेः सम्भवेन तेषां पृथक्करणानर्थक्यं स्यादिति प्रतिबन्ध्याशङ्कते—नन्विति ।

